॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला

१५५

२६७ शब्दरूपयुता-सोत्तरा—

# कौमुदी-रूपलता

पं० श्रीरामचन्द्रझा व्याकरणाचार्येण सकलशब्दसाधनसमन्वित-यावत्पङ्क्तिपरीक्षणाद्युपयोगिव्याख्यानसंवलिता विरचिता ।

दरभंगामण्डलान्तर्गत 'खुटवार' ग्रामवासिना

पण्डित श्रीशोभाकान्तझा व्याकरणाचार्येण

संशोधिता ।

प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः—

चौखम्बा-संस्कृत-सीरिज़-आफिस,

बनारस सिटी ।

वि० संवत् १९९९ ] [ सन् १९४२ ई०

# ग्रन्थोत्थान-निदानम् ।

हमारे पूर्वाचार्योंने सदा-सर्वदासे संस्कृत संसारका सम्राट् व्याकरणको ही मानते आरहे हैं, यतः व्याकरण के ज्ञान विना कोई भी विद्वान् संस्कृत भाषाको भली-भांति बोल-समझ नहीं सकते। व्याकरणका सर्वश्रेष्ठ ग्रन्थ 'सिद्धान्त-कौमुदी' है। आज-कल चार वर्ष पर्यन्त निरन्तर इसका अध्ययन करने पर भी अधिक विद्यार्थी इसमें योग्य नहीं होते। इसका निदान क्या है, इसकी तरफ जव कभी आप ध्यान देंगे तो निःशङ्कोच होकर कहना होगा कि सिद्धान्तकौमुदी के शब्दों को अपूर्ण रूपसे ही विद्यार्थी मनन किया करते हैं। प्रायः ऐसे कोई भी शब्द नहीं हैं जिनको इस ग्रन्थ में विद्यार्थी नहीं पढ़े हों लेकिन सिद्धान्त-कौमुदी में सभी शब्दों का संपूर्ण रूप, अर्थ और तत्तत् स्थलपर सर्वत्र प्रक्रियाकार्य का निर्देश नहीं है, अतः सरल मति वाले विद्यार्थी अध्यापकों से केवल सुनकर ही स्मरण नहीं रख सकते। इन्ही कठिनताओं को दूर करने के लिए वहुत सी प्राचीन टीका टिप्पणी व कोश आदि को देखकर प्रस्तुत ग्रन्थ की रचना की गई है। इसमें सिद्धान्तकौमुदी के गौण-मुख्य सभी शब्दों के तथा तत्समानाकार अन्य प्रसिद्ध शब्दों के भी प्रक्रियांश निर्देश पुरःसर ससूत्रसाधनप्रकार सहित संपूर्ण रूप और अर्थ दिये गये हैं तथा परीक्षोपयोगी सभी पंक्तियों की सरल व्याख्या भी कर दी गई है, जिनसे विद्यार्थी सुगमता पूर्वक ग्रन्थाशय समझकर परीक्षा की लेखन शैली को भी जान जायगें। मुझे विश्वास है कि इस एक ही 'सोत्तरा कौमुदीरूपलता' से प्रथमा, मध्यमा तथा अंग्रेजी स्कूलों के मास्टरों और छात्रों को भी समान रूपसे लाभ होगा। संस्कृत साहित्यमें इस ढंग का यह ग्रन्थ प्रथम वार ही प्रकाशित हुआ है।

इस ग्रन्थ की रचनामें काशीके प्रकाण्ड विद्वान् पूज्य प० श्रीगोपाल-शास्त्री नेने अध्यापक ग० सं० कालिज बनारस तथा पूज्यचरण प० श्रीअनिरुद्ध झा प्रधानाध्यापक वूढ़ानाथ सं० पाठशाला सुलतानगंज ( भागलपुर ) की भी विशेष सहानुभूति मिली है, तदर्थ उन विद्वानोंका मैं चिरकृतज्ञ हूँ।

अब आपको इस "चौखम्बा संस्कृत पुस्तकालय" का भी कुछ परिचय देना आवश्यक समझता हूं। यद्यपि ५० वर्षों से यह पुस्तकालय आपलोगों से प्रतिष्ठित होकर विश्वके कोने २ में परिचित होचुका है, फिर भी इसकी कुछ नवीन व्यवस्था आपलोगों को सूचित करने के लिए मुझे वाध्य कर रही है। इस पुस्तकालयसे पहले प्राचीन सद् ग्रन्थों का ही जीर्णोद्धार होता था लेकिन कुछ वर्षों से संस्कृत विद्यार्थियों की जन्मतः सिद्ध आर्थिक कठिनता को देखकर सभी प्रान्तोंके परीक्षापाठ्य निर्धारित ग्रन्थ तथा तदुपयोगी नवीन ग्रन्थों का भी सर्वोत्तम परीक्षोपयोगी टीका टिप्पणी व परिशिष्ट आदिसे समलंकृत सस्ता संस्करण प्रकाशित हो रहा है और कमीशन भी विद्यार्थियों को अधिकाधिक दिया जाता है। मेरा हार्दिक निवेदन है कि आपलोगों को प्रथमा, मध्यमा, शास्त्री, आचार्य आदि परीक्षाओं के जिन २ ग्रन्थों की आवश्यकता हो इसी पुस्तकालय में आर्डर देकर पुस्तकालयाध्यक्षके उच्च सिद्धान्तों का समर्थन करते रहें।

अन्तमें इस ग्रन्थके सर्वाधिकारी बाबू श्रीजयकृष्णदास हरिदासगुप्त जी को हार्दिक धन्यवाद देकर आपलोगों से प्रार्थना है कि यन्त्र दोष से वा प्रमादतः जो कुछ त्रुटियां रह गई हों उसे सुधार कर त्रुटिके लिये मुझे क्षमा करें।

निर्जला एकादशी
शुद्धज्येष्ठ शुक्लपक्ष
वि० स० १९९९

विद्वानों का वशंवद—
**श्रीरामचन्द्र झा**
तरौनी ( दरभंगा )

# शब्दानामकाराद्यनुक्रमणिका ।



* श्रीजनकनन्दिन्यै नमः *

## अथ सोत्तरा-

# कौमुदी-रूपलता ।

श्रीशप्रियं गुरुवरं हृदयान्धसूरं,
"श्रीमन्महेश" मनिशं शिरसा प्रणम्य ।
श्रीचन्द्रचूडचरणाम्बुजचञ्चरीक-
"श्रीरामचन्द्र" कृतिना क्रियते लतेयम् ॥

## अथ अजन्तपुँल्लिङ्गशब्दाः ॥ १ ॥

### [१] अकारान्तः पुँल्लिङ्गो 'राम' शब्दः ( भगवान् श्रीराम )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्रथमा | [1] रामः | [2] रामौ | [3] रामाः | कर्त्ता |
| द्वितीया | [4] रामम् | रामौ | [5] रामान् | कर्म |
| तृतीया | [6] रामेण | [7] रामाभ्याम् | [8] रामैः | करण |
| चतुर्थी | [9] रामाय | रामाभ्याम् | [10] रामेभ्यः | सम्प्रदान |

(१) संज्ञाशब्दोऽयमव्युत्पन्नः इति पक्षे–'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'। रमन्ते योगिनोऽस्मिन्निति पक्षे तु–'कृत्तद्धितसमासाश्च'। (२) वृद्धिरेचि। (३) 'प्रथमयोः पूर्वसवर्णः'। (४) 'अमिपूर्वः'। (५) 'तस्माच्छसोनः पुंसि'। (६) 'टाङसिङसामिनात्स्याः'। (७) 'सुपि च'। (८) 'अतो भिस ऐस्'। (९) 'ङेर्यः'। (१०) 'बहुवचने झल्येत्'।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| पञ्चमी | [1]रामात्-द् | रामाभ्याम् | रामेभ्यः | अपादान |
| षष्ठी | रामस्य | [2]रामयोः | [3]रामाणाम् | सम्बन्ध |
| सप्तमी | [4]रामे | रामयोः | [5]रामेषु | अधिकरण |
| | [6]हे राम | हे रामौ | हे रामाः | सम्बोधन |

एवं कृष्ण-मुकुन्द-देव-गोविन्द-गोपाल-अन्यतम[7]-इत्यादयोऽकारान्ताः शब्दाः रामशब्दवत् ।

[२] अकारान्तः पुँल्लिङ्गः सर्वनाम[8] 'सर्व' शब्दः ( सभी )

| | | | | |
|---|---|---|---|---|
| प्र० | सर्वः | सर्वौ | [9]सर्वे | कर्त्ता |
| द्वि० | सर्वम् | सर्वौ | सर्वान् | कर्म |
| तृ० | सर्वेण | सर्वाभ्याम् | सर्वैः | करण |
| च० | [10]सर्वस्मै | सर्वाभ्याम् | सर्वेभ्यः | सम्प्र० |
| पं० | [11]सर्वस्मात्-द् | सर्वाभ्याम् | सर्वेभ्यः | अपा० |

---

(१) 'वावसाने'। (२) 'ओसि च'। (३) 'ह्रस्वनद्यापो नुट्'। समानपदे ऋ-र-षेभ्यः परस्य चु-टु-तु-ल-शर् भिन्नवर्णव्यवधानेऽपि पदान्तभिन्नस्य नस्य णत्वं भवतीति निष्कर्षः। (४) 'आद्गुणः'। (५)'आदेशप्रत्यययोः'। (६) 'एङ्ह्रस्वात्सम्बुद्धेः'। (७)'अन्यतमशब्दस्य सर्वादिगणे पाठाभावात् 'राम' शब्दवत्। (८) सर्व-विश्व-उभ-उभय-डतर-डतम-अन्य-अन्यतर-इतर-त्वत-त्व-नेम-सम-सिम-पूर्व-पर-अवर-दक्षिण-उत्तर-अपर-अधर-स्व-अन्तर-त्यद्-तद्-यद्-एतद्-इदम्-अदस्-एक-द्वि-युष्मद्-अस्मद्-भवतु-किम्, एते 'सर्वनाम' शब्दाः। 'यथासंख्य' सूत्रे "समानाम्" इति निर्देशात् सर्वशब्दसमानार्थक 'सम' शब्दस्य एव गणे पाठो बोध्यः नतु तुल्यार्थकस्येति सिद्धान्तः। (९) 'सर्वादीनि सर्वनामानि'। 'जसः शी'। 'आद्गुणः'। (१०) 'सर्वनाम्नः स्मै'। "संज्ञोपसर्जनीभूतास्तु न सर्वादयः" अतः सर्वो नाम कश्चित् तस्मै 'सर्वाय' इत्यत्र संज्ञाशब्दत्वात् 'स्मै' आदेशो न। एवमुपसर्जनेऽपि बोध्यम्। (११) 'ङसिङ्योः स्मात् स्मिनौ'।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| ष० | सर्वस्य | सर्वयोः | सर्वेषाम्[1] | सम्ब० |
| स० | सर्वस्मिन् | सर्वयोः | सर्वेषु | अधि० |
| | हे सर्व | हे सर्वौ | हे सर्वे | सम्बो० |

एवं विश्व-कतर-यतर-ततर-एकतर-कतम-यतम-ततम-एकतम-अन्य-अन्यतर-इतर-त्वत-त्व[2]-सम-सिम-इति सर्वादिगण-पठिता अकारान्तपुँल्लिङ्गाः । संख्याभिन्नार्थक एकशब्दश्च[3] ।

[ ३ ] अकारान्तः पुंल्लिङ्गो नित्यं द्विवचनान्तः 'उभ' शब्दः ( दो )

प्र०-उभौ द्वि०-उभौ तृ०-उभाभ्याम् च०-उभाभ्याम्
पं०-उभाभ्याम् ष०-उभयोः स०-उभयोः सम्बो०-हेउभौ

[ ४ ] अकारान्तः पुंल्लिङ्ग 'उभय' शब्दः अस्य द्विवचनं नास्ति, अनभिधानात्[5] ( दो अवयववाला ) ।

| | | | | |
|---|---|---|---|---|
| प्र० | उभयः | ० | उभये | कर्त्ता |
| द्वि० | उभयम् | ० | उभयान् | कर्म |

(१) 'आमि सर्वनाम्नः सुट्' । अवशिष्टस्य 'राम' शब्दवत् साधनप्रकारो बोध्यः । (२) त्वत-त्व-शब्दावदन्तावन्यपर्यायौ एकस्तान्त इत्यपरे अत एव "त्वदधरमधुरमधूनि पिबन्तम्" इति संगच्छते ।

(३) "एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।
साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते ॥"

इति कोशात् एकशब्दस्य अष्टौ अर्थाः, तत्र संख्यावाची 'एक' शब्दो नित्यैकवचनान्तः । (४) सर्वनामकार्याणां द्विवचनेऽभावेऽपि 'अव्ययसर्वनाम्नामकजि'ति अकज्विधानार्थमस्य गणे पाठस्यावश्यको बोध्यः । कप्रत्ययेन तु नेष्टसिद्धिः 'उभादुदात्तो नित्यम्' इत्यत्र नित्यमिति योगविभागेनायच् प्रसङ्गात् । अकचि तु तन्मध्यपतितन्यायेन द्विवचनपरत्वाभावान्न दोषः । साधनप्रकारो 'राम' शब्दवत् बोध्यः । (५) 'उभयोऽन्यत्र' इति वार्तिकस्य 'उभयो मणिः-उभये देवमनुष्याः' इत्युदाहरणद्वयदानपरकभाष्येण, 'तद्धितश्चाऽसर्वविभक्तिः' इति सूत्रेण अव्ययसञ्ज्ञावारणाय

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| तृ० | उभयेन | ० | उभयैः | करण |
| च० | उभयस्मै | ० | उभयेभ्यः | सम्प्र० |
| पं० | उभयस्मात्-द् | ० | उभयेभ्यः | अपा० |
| ष० | उभयस्य | ० | उभयेषाम् | सम्ब० |
| स० | उभयस्मिन् | ० | उभयेषु | अधि० |
| | हे उभय | ० | हे उभये | सम्बो० |

[ ५ ] अकारान्तः पुँल्लिङ्गो 'नेम' शब्दः ( आधा )

| | | | | |
|---|---|---|---|---|
| प्र० | नेमः | नेमौ | नेमे-नेमाः | कर्ता |
| द्वि० | नेमम् | नेमौ | नेमान् | कर्म |
| तृ० | नेमेन | नेमाभ्याम् | नेमैः | करण |
| च० | नमस्मै | नेमाभ्याम् | नेमेभ्यः | सम्प्र० |
| पं० | नेमस्मात्-द् | नेमाभ्याम् | नेमेभ्यः | अपा० |
| ष० | नेमस्य | नेमयोः | नेमेषाम् | सम्ब० |
| स० | नेमस्मिन् | नमयोः | नेमेषु | अधि० |
| | हे नेम | हे नमौ | हे नेमे-नेमाः | सम्बो० |

[ ६ ] अकारान्तः पुँल्लिङ्गः 'पूर्व'शब्दः ( पूर्व )

| | | | | |
|---|---|---|---|---|
| प्र० | पूर्वः | पूर्वौ | पूर्वे[2]-पूर्वाः | कर्ता |

---

'तसिलादय' इत्यादि परिगणनेन च 'उभय' शब्दस्य द्विवचने रूपमनभिधानमिति कैयटाशयः। "नचोदाहरणमादरणीयम्" (उदाहृतातिरिक्तोदाहरणाभावः इत्येवं परतया नादरणीयम्)। इति भाष्येण, पचति रूपं-पचति कल्पमिति परिगणनफलदानेन च द्विवचनेऽपि रूपं भवत्येवेति 'हरदत्ता'शयः। एवञ्च हरदत्तमते द्विवचनेऽपि रूपं भवत्येवेति सर्ववित्। 'सर्व'शब्दवत् साधनप्रकारो वोध्यः। (१) 'प्रथमचरणमतयाल्पार्धकतिपयनेमाश्च'। अवशिष्टं 'सर्व' शब्दवत्। (२) 'पूर्वपरावरदक्षिणोत्तरापराधराणिव्यवस्थायामसंज्ञायाम्'=नियमेन अवधिसापेक्षार्थे संज्ञाभिन्नार्थे च वर्तमानानां पूर्वादीनां सप्तानां जसि सर्वनामसंज्ञा विकल्पो नत्वन्यत्रेति भावः। अत एव 'दक्षिणा गायकाः' इत्यत्र दक्षिणशब्दस्य कुशलपरत्वेन अवध्यपेक्षत्वाऽभावात् सर्वनामसंज्ञा न।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| द्वि० | पूर्वम् | पूर्वौ | पूर्वान् | कर्म |
| तृ० | पूर्वेण | पूर्वाभ्याम् | पूर्वैः | करण |
| च० | पूर्वस्मै | पूर्वाभ्याम् | पूर्वेभ्यः | सम्प्र० |
| पं० | पूर्वस्मात्[1]-द् / पूर्वात्-द् | पूर्वाभ्याम् | पूर्वेभ्यः | अपा० |
| ष० | पूर्वस्य | पूर्वयोः | पूर्वेषाम् | सम्ब० |
| स० | पूर्वस्मिन्[2]-पूर्वे | पूर्वयोः | पूर्वेषु | अधि० |
| | हे पूर्व | हे पूर्वौ | हे पूर्वे-पूर्वाः | सम्बो० |

एवं पर-अवर-दक्षिण-उत्तर-अपर-अधर-स्व[3]-अन्तर[4] शब्दाः ।

इति अजन्तपुँल्लिङ्गे सर्वनामशब्दाः ।

### [ ७ ] अकारान्तः पुँल्लिङ्गः 'प्रथम' शब्दः ( पहला )

| | | | | |
|---|---|---|---|---|
| प्र० | प्रथमः | प्रथमौ | प्रथमे[5]-प्रथमाः | कर्ता |

शेषं 'राम' शब्दवत् ।

एवं चरम-द्वय-द्वितय[6]-त्रय-त्रितय-चतुष्टय-पञ्चतय-अल्प-अर्ध[7]-कतिपय-शब्दाः 'प्रथम' शब्दवत् ।

### [ ८ ] अकारान्तः पुंल्लिङ्गो 'द्वितीय' शब्दः [ दूसरा ]

| | | | | |
|---|---|---|---|---|
| प्र० | द्वितीयः | द्वितीयौ | द्वितीयाः | कर्ता |
| द्वि० | द्वितीयम् | द्वितीयौ | द्वितीयान् | कर्म |

---

(१-२) 'पूर्वादिभ्यो नवभ्यो वा' । अन्यत् सर्वं 'सर्व' शब्दवत् । (३) आत्मीयार्थे 'स्व' शब्दः 'पूर्व' शब्दवत्, ज्ञातिधनार्थकस्तु 'राम' शब्दवत् । (४) बाह्यार्थकः परिधानीयार्थकश्च 'अन्तर' शब्दः 'पूर्व' शब्दवत् । अन्यत्र 'राम' शब्दवत् । (५) 'प्रथमचरमतयाल्पार्धकतिपयनेमाश्च' । 'नेम' शब्दव्यतिरिक्तानां प्रथमादिशब्दानां गणे पाठाभावात् जसोऽन्यत्र न सर्वनामकार्यमिति ध्येयम् । (६) 'द्वित्रिभ्यां तयस्यायज्वा' । यस्येति च । (७) 'अर्धं नपुंसकम्' = समासवाची अर्धशब्द एव नित्यनपुंसकः, खण्डवाची तु पुँल्लिङ्ग एव यथा 'ग्रामार्धः' इत्य

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| तृ० | द्वितीयेन | द्वितीयाभ्याम् | द्वितीयैः | करण |
| च० | { द्वितीयस्मै[1] द्वितीयाय | द्वितीयाभ्याम | द्वितीयेभ्यः | सम्प्र० |
| पं० | { द्वितीयस्मात्-द् द्वितीयात्-द् | द्वितीयाभ्याम | द्वितीयेभ्यः | अपा० |
| ष० | द्वितीयस्य | द्वितीययो | द्वितीयानाम् | सम्ब० |
| स० | { द्वितीयस्मिन् द्वितीये | द्वितीययोः | द्वितीयेषु | अधि० |
| | हे द्वितीय | हे द्वितीयौ | हे द्वितीयाः | सम्बो० |

एवं 'तृतीय' शब्दोऽपि ।

[९] अकारान्तः पुंल्लिङ्गो 'निर्जर'शब्दः=निर्गता जरा यस्मात् (देवता)

| | | | | |
|---|---|---|---|---|
| प्र० | निर्जरः | { [2]निर्जरसौ निर्जरौ | निर्जरसः निर्जराः | कर्ता |
| द्वि० | { निर्जरसम् निर्जरम | निर्जसौ निर्जरौ | निर्जरसः निर्जरान् | कर्म |
| तृ० | { निर्जरसा निर्जरेण | निर्जराभ्याम् | [3]निर्जरैः | करण |

(१) तीयस्य ङित्सूपसंख्यानम् (वा०)। तीयप्रत्ययान्तस्य ङे-ङसि-ङि-इत्येतेषु ङित्सु सर्वनामसंज्ञात्वात् 'सर्व' शब्दवत्, अन्येषां 'राम' शब्दवत् साधनप्रकारो बोध्यः। (२) 'जराया जरसन्यतरस्याम्' = जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ। एवञ्च सु-भ्याम्-भिस्-भ्यस्-सुप्-विभक्तीन् वर्जयित्वा सर्वत्र जरसादेशो भवतीति निष्कर्षः। 'पदाङ्गाधिकारे तस्य तदन्तस्य च' (प०) = पदाधिकारे अङ्गाधिकारे च यस्य यद् विहितं तत् तस्य तदन्तस्य च भवतीत्यर्थः। तेन जरसादेशस्य अङ्गाधिकारस्थत्वात् जराशब्दस्य तदन्तस्य (निर्जरशब्दस्य) च जरसादेशो भवतीति भावः। (३) अत्र ऐसादेशे कृते अजादिपरकत्वात् जरसादेशस्तु न सन्निपातपरिभाषाविरोधात्। जरसादेशाभावपक्षे, हलादौ (सु-भ्याम्-भिस-भ्यस-सुप्-विभक्तिषु) च 'राम' शब्दवत् साधनप्रकारो बोध्यः।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| च० | निर्जरसे<br>निर्जराय | निर्जराभ्याम् | निर्जरेभ्यः | सम्प्र० |
| पं० | निर्जरसः<br>निर्जरात्-द् | निर्जराभ्याम् | निर्जरेभ्यः | अपा० |
| ष० | निर्जरसः<br>निर्जरस्य | निर्जरसोः<br>निर्जरयोः | निर्जरसाम्<br>निर्जराणाम् | सम्ब० |
| स० | निर्जरसि<br>निर्जरे | निर्जरसोः<br>निर्जरयोः | निर्जरेषु | अधि० |
| | हे निर्जर | हे निर्जरसौ<br>हे निर्जरौ | हे निर्जरसः<br>हे निर्जराः | सम्बो० |

[ १० ] अकारान्तः पुँल्लिङ्गः 'पाद' शब्दः ( पैर )

| | | | | |
|---|---|---|---|---|
| प्र० | पादः | पादौ | पादाः | कर्त्ता |
| द्वि० | पादम् | पादौ | पदः[1]-पादान् | कर्म |
| तृ० | पदा<br>पादेन | पद्भ्याम्<br>पादाभ्याम् | पद्भिः<br>पादैः | करण |
| च० | पदे<br>पादाय | पद्भ्याम्<br>पादाभ्याम् | पद्भ्यः<br>पादेभ्यः | सम्प्र० |
| पं० | पदः<br>पादात्-द् | पद्भ्याम्<br>पादाभ्याम् | पद्भ्यः<br>पादेभ्यः | अपा० |

(१) 'पद्दन्नोमास्०=पाद-दन्त-नासिका-मास-हृदय-निशा-असृज्-यूष दोष्-यकृत्-शकृत्-उदक-आस्य-एषां क्रमेण-पद्-दत्-नस्-मास्-हृद्-निश्-असन्-यूषन्-दोषन्-यकन्-शकन्-उदन्-आसन्-आदेशाः शसादौ वा स्युरित्यर्थः। शस्विभक्तेः प्राक्, पदादेशाभावपक्षे च 'राम' शब्दवत् साधनप्रकारो बोध्यः। अत्र केचित् 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' 'स्वान्तं हृन्मानसं मनः' इत्यादौ पद्-हृद् इति प्रथमैकवचनदर्शनादत्र सूत्रे प्रभृतिग्रहणं प्रकारार्थमित्युक्तम्। प्रकारः= सादृश्यम्, तच्चात्र प्रत्ययत्वेनैव गृह्यते। तथा च पूर्वोक्तादेशाः सर्वत्र भवन्तीति तन्मतम्। तदा-पत्, पदौ, पदः, पदम्, पदौ इति, भवति। एवं दन्ता-

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| ष० | पदः<br>पादस्य | पदोः<br>पादयोः | पदाम्<br>पादानाम् | सम्ब० |
| स० | पदि<br>पादे | पदोः<br>पादयोः | पत्सु<br>पादेषु | अधि० |
| | हे पाद | हे पादौ | हे पादाः | सम्बो० |

[ ११ ] अकारान्तः पुंल्लिङ्गो 'दन्त' शब्दः ( दाँत )

| | | | | |
|---|---|---|---|---|
| प्र० | दन्तः | दन्तौ | दन्ताः | कर्त्ता |
| द्वि० | दन्तम् | दन्तौ | दतः-दन्तान् | कर्म |
| तृ० | दता<br>दन्तेन | दद्भ्याम्<br>दन्ताभ्याम् | दद्भिः<br>दन्तैः | करण |
| च० | दते<br>दन्ताय | दद्भ्याम्<br>दन्ताभ्याम् | दद्भ्यः<br>दन्तेभ्यः | सम्प्र० |
| पं० | दतः<br>दन्तात्-द् | दद्भ्याम्<br>दन्ताभ्याम् | दद्भ्यः<br>दन्तेभ्यः | अपा० |
| ष० | दतः<br>दन्तस्य | दतोः<br>दन्तयोः | दताम्<br>दन्तानाम् | सम्ब० |
| स० | दति<br>दन्ते | दतोः<br>दन्तयोः | दत्सु<br>दन्तेषु | अधि० |
| | हे दन्त | हे दन्तौ | हे दन्ताः | सम्बो० |

[१२] अकारान्तः पुँल्लिङ्गो 'मास' शब्दः ( महीना )

| | | | | |
|---|---|---|---|---|
| प्र० | मासः | मासौ | मासाः | कर्त्ता |
| द्वि० | मासम् | मासौ | मासः-मासान् | कर्म |

---

दीनामपि ज्ञेयम् । अत एव 'ककुद्दोषणी याचते महादेवः' इत्यत्र दोषन्नादेशः सङ्गच्छते । एतद् भाष्येण दोषशब्दस्य नपुंसकत्वमप्यायातीति बोध्यम् । वस्तु तस्तु शब्दत्वेनैव सादृश्यग्रहणमुचितम् नलुमतेत्यस्याऽनित्यत्वे गौरवात् 'वा शोके' ति सूत्रं तु नियमार्थं बोध्यमिति नवीनाः । (१) पादशब्दवत् बोध्यम्, भत्वादत्र जस्त्वं न ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| तृ० | मासा<br>मासेन | माभ्याम्[1]<br>मासाभ्याम् | माभिः[2]<br>मासैः | करण |
| च० | मासे<br>मासाय | माभ्याम्<br>मासाभ्याम् | माभ्यः<br>मासेभ्य | सम्प्र० |
| पं० | मासः<br>मासात्-द् | माभ्याम्<br>मासाभ्याम् | माभ्यः<br>मासेभ्यः | अपा० |
| ष० | मासः<br>मासस्य | मासोः<br>मासयोः | मासाम्<br>मासानाम् | सम्ब० |
| स० | मासि<br>मासे | मासोः<br>मासयोः | मास्सु<br>मासेषु | अधि० |
| | हे मास | हे मासौ | हे मासाः | सम्बो० |

[१३] अकारान्तः पुँल्लिङ्गो 'यूष' शब्दः ( मांड़ )

| | | | | |
|---|---|---|---|---|
| प्र० | यूषः | यूषौ | यूषाः | कर्त्ता |
| द्वि० | यूषम् | यूषौ | यूष्णः[3]-यूषान् | कर्म |
| तृ० | यूष्णा[4]<br>यूषेण | यूषभ्याम्<br>यूषाभ्याम् | यूषभिः<br>यूषैः | करण |
| च० | यूष्णे<br>यूषाय | यूषभ्याम्<br>यूषाभ्याम् | यूषभ्यः<br>यूषेभ्यः | सम्प्र० |
| पं० | यूष्णः<br>यूषात्-द् | यूषभ्याम्<br>यूषाभ्याम् | यूषभ्यः<br>यूषेभ्यः | अपा० |
| ष० | यूष्णः<br>यूषस्य | यूष्णोः<br>यूषयोः | यूष्णाम्<br>यूषाणाम् | सम्ब० |
| स० | यूष्णि-यूषणि[5]<br>यूषे | यूष्णोः<br>यूषयोः | यूषसु<br>यूषेषु | अधि० |
| | हे यूष | हे यूषौ | हे यूषाः | सम्बो० |

(१-२) 'स्वादिष्विति' पदत्वे, रुत्वे, यत्वे, यलोपे, साधुः । (३-४) 'अल्लोपोनः' । 'रषाभ्यां नोणः समानपदे' । (५) 'विभाषा ङिश्योः'। 'यूषन्' आदेशपक्षे "राजन्" शब्दवत ।

## [१४] अकारान्तः पुँल्लिङ्गो 'द्व्यह्न' शब्दः ( दो दिन )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | द्व्यह्नः[1] | द्व्यह्नौ | द्व्यह्नाः | कर्त्ता |
| द्वि० | द्व्यह्नम् | द्व्यह्नौ | द्व्यह्नान् | कर्म |
| तृ० | द्व्यह्नेन | द्व्यह्नाभ्याम | द्व्यह्नैः | करण |
| च० | द्व्यह्नाय | द्व्यह्नाभ्याम् | द्व्यह्नेभ्यः | सम्प्र० |
| पं० | द्व्यह्नात्–द् | द्व्यह्नाभ्याम् | द्व्यह्नेभ्यः | अपा० |
| ष० | द्व्यह्नस्य | द्व्यह्नयोः | द्व्यह्नानाम् | सम्ब० |
| स० | द्व्यह्नि[2]–द्व्यहनि–द्व्यह्ने | द्व्यह्नयोः | द्व्यह्नेषु | अधि० |
| | हे द्व्यह्न | हे द्व्यह्नौ | हे द्व्यह्नाः | सम्बो० |

एवं त्र्यह्न–व्यह्न–सायाह्न–[illegible]न्दादयोऽपि द्व्यह्नशब्दवत् ।

## [१५] आकारान्तः पुँल्लिङ्गो 'विश्वपा' शब्दः ( विश्वरक्षक )

| | | | | |
|---|---|---|---|---|
| प्र० | विश्वपाः | विश्वपौ[3] | विश्वपाः | कर्त्ता |
| द्वि० | विश्वपाम् | विश्वपौ | विश्वपः[4] | कर्म |
| तृ० | विश्वपा | विश्वपाभ्याम् | विश्वपाभिः | करण |
| च० | विश्वपे | विश्वपाभ्याम् | विश्वपाभ्यः | सम्प्र० |
| पं० | विश्वपः | विश्वपाभ्याम् | विश्वपाभ्यः | अपा० |
| ष० | विश्वपः | विश्वपोः | विश्वपाम् | सम्ब० |
| स० | विश्वपि | विश्वपोः | विश्वपासु | अधि० |
| | हे विश्वपाः | हे विश्वपौ | हे विश्वपाः | सम्बो० |

एवं धनपा–धेनुपा–गोपा–वनपा–द्वारपा–शंखध्मा–पाणिध्मा–मुखध्मा–अग्निध्माप्रभृतयः आकारान्तधात्वन्ताः । क्त्वाः[5]–स्ना–इति च

---

(१) द्वयोरह्नोर्भवः इति विग्रहे 'तद्धितार्थ' इति समासे, ठञि, तस्य लुकि, 'राजाहःसखीभ्यष्टच्' इति टचि, 'अह्नोऽह्न एतेभ्यः' इति अह्नादेशे यणि सिद्धम् । (२) 'संख्या-वि-साय-पूर्वस्याऽह्नस्याऽहन्नन्यतरस्यां ङौ' । विभाषा ङिश्योः । (३) दीर्घाज्जसि च इति दीर्घनिषेधे वृद्धिः । (४) 'आतो धातोः' । (५) 'क्त्वा–स्ना

[ १६ ] आकारान्तः पुँल्लिङ्गो 'हाहा' शब्दः ( गन्धर्व )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | हाहाः | हाहौ | हाहाः | कर्त्ता |
| द्वि० | हाहाम् | हाहौ | हाहान्[1] | कर्म |
| तृ० | हाहा[2] | हाहाभ्याम् | हाहाभिः | करण |
| च० | हाहै[3] | हाहाभ्याम् | हाहाभ्यः | सम्प्र० |
| पं० | हाहाः[4] | हाहाभ्याम् | हाहाभ्यः | अपा० |
| ष० | हाहाः[5] | हाहौः[6] | हाहाम् | सम्ब० |
| स० | हाहे[7] | हाहौः | हाहासु | अधि० |
| | हे हाहाः | हे हाहौ | हे हाहाः | सम्बो० |

[ १७ ] इकारान्तः पुँल्लिङ्गो 'हरि'शब्दः ( भगवान् विष्णु )

| | | | | |
|---|---|---|---|---|
| प्र० | हरिः | हरी[8] | हरयः[9] | कर्त्ता |
| द्वि० | हरिम् | हरी | हरीन् | कर्म |
| तृ० | हरिणा[10] | हरिभ्याम् | हरिभिः | करण |
| च० | हरये[11] | हरिभ्याम् | हरिभ्यः | सम्प्र० |
| प० | हरेः[12] | हरिभ्याम् | हरिभ्यः | अपा० |
| ष० | हरेः | हर्योः | हरीणाम् | सम्ब० |
| स० | हरौ[13] | हर्योः | हरिषु | अधि० |
| | हे हरे[14] | हे हरी | हे हरयः | सम्बो० |

---

इति प्रत्ययौ । नचैवं धातुत्वाभावात् शसि–क्त्वः–इनः–इत्यत्र कथमाकारलोपः इति चेत्, 'आतो धातोः' इति सूत्रस्थ 'आत' इति योगविभागेन बोध्यम् । (१)'हाहा' शब्दस्य अव्युत्पन्नप्रातिपदिकत्वेन धातुत्वाभावात् 'आतो धातोः' इत्याल्लोपादिकं न । (२) अकः सवर्णे दीर्घः । (३) 'वृद्धिरेचि' । (४–५) सवर्णदीर्घः । (६) 'वृद्धिरेचि' । (७) 'आद्गुणः' । शेषं विश्वपावत् । (८) 'प्रथमयोः पूर्वसवर्णः' । (९) 'जसि च' । (१०) शेषोघ्यसखि । 'आ-ङो नाऽस्त्रियाम्' । (११) 'घेर्ङिति' । (१२) 'ङसि ङसोश्च' । (१३) 'अच्चघेः' । (१४) 'ह्रस्वस्य गुणः' । 'एङ्ह्रस्वात्सम्बुद्धेः' ।

एवम् अग्नि-रवि-कवि-भूपति-श्रीपति-अतिसखि-इत्यादयः ।

इकारान्तपुँल्लिङ्गा ।

[ १८ ] इकारान्तः पुँल्लिङ्गः 'सखि'[1]शब्दः ( मित्र )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | सखा[2] | सखायौ[6] | सखायः | कर्त्ता |
| द्वि० | सखायम् | सखायौ | सखीन् | कर्म |
| तृ० | सख्या[4] | सखिभ्याम् | सखिभिः | करण |
| च० | सख्ये | सखिभ्याम् | सखिभ्यः | सम्प्र० |
| पं० | सख्युः[5] | सखिभ्याम् | सखिभ्यः | अपा० |
| ष० | सख्युः | सख्योः | सखीनाम् | सम्ब० |
| स० | सख्यौ[6] | सख्योः | सखिषु | अधि० |
| | हे सखे | हे सखायौ | हे सखायः | सम्बो० |

[ १९ ] इकारान्तः पुँल्लिङ्गः 'सुसखि' शब्दः ( प्रियमित्र )

| | | | | |
|---|---|---|---|---|
| प्र० | सुसखा[7] | सुसखायौ | सुसखायः | कर्त्ता |
| द्वि | सुसखायम् | सुसखायौ | सुसखीन् | कर्म |
| तृ० | सुसखिना[8] | सुसखिभ्याम् | सुसखिभिः | करण |
| च० | सुसखये | सुसखिभ्याम् | सुसखिभ्यः | सम्प्र० |
| पं० | सुसखेः | सुसखिभ्याम् | सुसखिभ्यः | अपा० |
| ष० | सुसखेः | सुसख्योः | सुसखीनाम् | सम्ब० |

(१) 'शेषो घ्यसखि' इति सूत्रे असखि, इत्युक्तत्वात् 'सखि' शब्दस्य घिसंज्ञा न भवति । (२) 'अनङ् सौ' । 'सर्वनामस्थाने चाऽसम्बुद्धौ'। सुलोपः । नलोपः । (३) 'सख्युरसम्बुद्धौ'। 'अचो ञ्णिति' । (४) घित्वाऽभावात् नाभावाऽभावे यण् । (५) 'ख्यत्यात्परस्य' । (६) 'औत्' ।(७) 'राजाहः सखिभ्यष्टच्' इति टचि 'सुसखः' इति तु नस्यात् 'न पूजनादिति निषेधात् । सखिशब्दान्तत्वेऽपि'पदाङ्गाधिकारे' इति परिभाषया 'सखि' शब्दवत् अनङादिकार्यम्भवति । (८) 'समुदायस्य सखिरूपत्वाभावेन घित्वात् नाऽऽदेशः । इतोऽग्रे हरिशब्दवत् साधनप्रकारो बोध्यः ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| स० | सुसख्यौ | सुसख्योः | सुसखिषु | अधि० |
| | हे सुसखे | हे सुसखायौ | हे सुसखायः | सम्बो० |

एवम् अतिशयितः सखा 'अतिसखा'[1] तथा परमसखा यस्येति 'परमसखा' इत्यपि बोध्यम् ।

[ २० ] इकारान्तः पुँल्लिङ्गः 'पति' शब्दः ( स्वामी )

| | | | | |
|---|---|---|---|---|
| प्र० | पतिः | पती | पतयः | कर्त्ता |
| द्वि० | पतिम् | पती | पतीन् | कर्म |
| तृ० | पत्या[2] | पतिभ्याम् | पतिभिः | करण |
| च० | पत्ये | पतिभ्याम् | पतिभ्यः | सम्प्र० |
| पं० | पत्युः[3] | पतिभ्याम् | पतिभ्यः | अपा० |
| ष० | पत्युः | पत्योः | पतीनाम् | सम्ब० |
| स० | पत्यौ[4] | पत्योः | पतिषु | अधि० |
| | हे पते | हे पती | हे पतयः | सम्बो० |

[ २१ ] इकारान्तः पुंल्लिङ्गो 'भूपति' शब्दः ( राजा )

| | | | | |
|---|---|---|---|---|
| प्र० | भूपतिः | भूपती | भूपतयः | कर्त्ता |
| द्वि० | भूपतिम् | भूपती | भूपतीन् | कर्म |
| तृ० | भूपतिना[5] | भूपतिभ्याम् | भूपतिभिः | करण |
| च० | भूपतये | भूपतिभ्याम् | भूपतिभ्यः | सम्प्र० |
| पं० | भूपतेः | भूपतिभ्याम् | भूपतिभ्यः | अपा० |

(१) सखायमतिक्रान्तः, राज्ञः सखा, इति विग्रहे तु 'न पूजनाद्'इति निषेधस्याभावेन 'राजाहः सखिभ्यः' इति टचि, अतिसखः, राजसखः, 'राम' शब्दवदिति बोध्यम् । (२) 'पतिः समास एव'। सीतायाः 'पतये नमः' इत्यादि त्वार्षम् । (३) 'ख्यत्यात्परस्य'। (४) 'औत्'। (५) 'पतिः समास एव, अतःसमासे-भूपति- गणपति-श्रीपति-पृथ्वीपति-प्रभृतयो घिसंज्ञका एव, तेषां सर्वाण्यपि रूपाणि तत्र तत्र साधनकार्याणि च 'हरि' शब्दवत् ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| ष० | भूपतेः | भूपत्योः | भूपतीनाम् | सम्ब० |
| स० | भूपतौ | भूपत्योः | भूपतिषु | अधि० |
| | हे भूपते | हे भूपती | हे भूपतयः | सम्बो० |

एवम् गणपति-श्रीपति-पृथ्वीपति-आदयः।

[ २२ ] त्रिषु लिङ्गेषु समानः, डतिप्रत्ययान्त इकारान्तः 'कति' शब्दो नित्यं बहुवचनान्तः ( कितने )

प्र०-कति[2] द्वि०-कति तृ०-कतिभिः च०-कतिभ्यः
पं०-कतिभ्यः ष०-कतीनाम् स०-कतिषु सम्बो० हे कति

[ २३ ] इकारान्तः पुंल्लिङ्गो नित्यं बहुवचनान्तः 'त्रि' शब्दः [तीन]

प्र०-त्रयः द्वि०-त्रीन् तृ०-त्रिभिः च०-त्रिभ्यः।
पं०-त्रिभ्यः ष०-त्रयाणाम्[3] स०-त्रिषु सम्बो०-हे त्रयः

[ २४ ] इकारान्तः पुंल्लिङ्गः 'प्रियत्रि' शब्दः ( ३ प्रियवाले पुरुष )

| | | | | |
|---|---|---|---|---|
| प्र० | प्रियत्रिः[4] | प्रियत्री | प्रियत्रियः | कर्त्ता |
| द्वि० | प्रियत्रीं | प्रियत्री | प्रियत्रीन् | कर्म |
| तृ० | प्रियत्रिणा | प्रियत्रिभ्याम् | प्रियत्रिभिः | करण |
| च० | प्रियत्रये | प्रियत्रिभ्याम् | प्रियत्रिभ्यः | सम्प्र० |
| पं० | प्रियत्रेः | प्रियत्रिभ्याम् | प्रियत्रिभ्यः | अपा० |
| ष० | प्रियत्रेः | प्रियत्र्योः | प्रियत्रयाणाम्[5] | सम्ब० |

(१)युष्मद्-अस्मद् षट्संज्ञकाः त्रिषु (लिङ्गेषु) सरूपाः ( समानानि रूपाणि-येषां ते ) (२) 'बहुगणवतुडति संख्या'। 'डति च'। 'षड्भ्यो लुक्'। (३) 'त्रेस्त्रयः'। (४) प्रियास्त्रयो यस्येति बहुव्रीहिः, तस्यान्यपदार्थप्रधानत्वेन 'त्रि'शब्दत्वाभावात्-'हरि' वत्तस्य रूपाणि। (५)अत्र केचित् त्रिशब्दस्य उपसर्जनत्वेन गौणमुख्यन्यायात् 'त्रेस्त्रयः' इत्यस्याऽप्रवृत्त्या प्रियत्रीणामित्येव भवतीत्युक्तं, तन्न गौणमुख्यन्यायस्य पदकार्यविषयत्वात्।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| स० | प्रियत्रौ | प्रियत्र्योः | प्रियत्रिषु | अधि० |
| | हे प्रियत्रे | हे प्रियत्री | हे प्रियत्रयः | सम्बो० |

[२५] इकारान्तः पुँल्लिङ्गः 'द्वि' शब्दो नित्यं द्विवचनान्तः[1] ( दो )

प्र०–द्वौ[2] द्वि०–द्वौ तृ०–द्वाभ्याम् च०–द्वाभ्याम्
पं०–द्वाभ्याम् ष०–द्वयोः स०–द्वयोः (त्यदादेः सम्बोधनं नास्ति)।

(२६) इकारान्तः पुँल्लिङ्गः 'औडुलोमि' शब्दः ( तारा के सदृश-लोमवाले पुरुष की सन्तान )

| | | | | |
|---|---|---|---|---|
| प्र० | औडुलोमिः[3] | औडुलोमी | उडुलोमाः[4] | कर्त्ता |
| द्वि० | औडुलोमिम् | औडुलोमी | उडुलोमान् | कर्म |
| तृ० | औडुलोमिना | औडुलोमिभ्याम् | उडुलोमैः | करण |
| च० | औडुलोमये | औडुलोमिभ्याम् | उडुलोमेभ्यः | सम्प्र० |
| पं० | औडुलोमेः | औडुलोमिभ्याम् | उडुलोमेभ्यः | अपा० |
| ष० | औडुलोमेः | औडुलोम्योः | उडुलोमानाम् | सम्ब० |
| स० | औडुलोमौ | औडुलोम्योः | उडुलोमेषु | अधि० |
| | हे औडुलोमे | हे औडुलोमी | हे उडुलोमाः | सम्बो० |

[ २७ ] ईकारान्तः पुंलिङ्गः 'पपी' शब्दः ( सूर्य )

| | | | | |
|---|---|---|---|---|
| प्र० | पपीः[5] | पप्यौ[6] | पप्यः | कर्त्ता |

---

(१) 'द्वि'शब्दस्य द्वित्वनियतत्वादिति भावः । (२) 'त्यदादीनामः' । (३) उडूनि=नक्षत्राणीव लोमानि यस्य स 'उडुलोमा'। तस्यापत्यम्, औडुलोमिः । 'बाह्वादिभ्यश्च' इति इञ् । 'नस्तद्धिते' इति टिलोपः । आदिवृद्धिः । (४) उडुलोम्नः अपत्यमिति विग्रहे बहुवचनेषु 'बाह्वादिभ्यश्च' इति सूत्रं प्रबाध्य 'लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः' इत्यनेन अकारप्रत्यये टिलोपे ञित्वाभावेन नादिवृद्धिः । एवञ्च एकवचनद्विवचनयोः 'हरि' वत्, बहुवचनेषु 'राम' वद्रूपं बोध्यम् । (५) 'यापोः किद्द्वे च' इति ईप्रत्ययान्तत्वेन ङ्यन्तत्वाऽभावात् सुलोपो न । (६) दीर्घाज्जसि चेति दीर्घनिषेधात् यणि ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| द्वि० | पपीम्[1] | पप्यौ | पपीन्[2] | कर्म |
| तृ० | पप्या | पपीभ्याम् | पपीभिः | करण |
| च० | पप्ये | पपीभ्याम् | पपीभ्यः | सम्प्र० |
| पं० | पप्यः | पपीभ्याम् | पपीभ्यः | अपा० |
| ष० | पप्यः | पप्योः | पप्याम् | सम्ब० |
| स० | पपी[3] | पप्योः | पपीषु | अधि० |
| | हे पपीः | हे पप्यौ | हे पप्यः | सम्बो० |

[ २८ ] ईकारान्तः पुंलिङ्गो 'वातप्रमी'[4] शब्दः ( मृग )

| | | | | |
|---|---|---|---|---|
| प्र० | वातप्रमीः | वातप्रम्यौ | वातप्रम्यः | कर्त्ता |
| द्वि० | वातप्रमीम् | वातप्रम्यौ | वातप्रमीन् | कर्म |
| तृ० | वातप्रम्या | वातप्रमीभ्याम् | वातप्रमीभिः | करण |
| च० | वातप्रम्ये | वातप्रमीभ्याम् | वातप्रमीभ्यः | सम्प्र० |
| पं० | वातप्रम्यः | वातप्रमीभ्याम् | वातप्रमीभ्यः | अपा० |
| ष० | वातप्रम्यः | वातप्रम्योः | वातप्रम्याम् | सम्ब० |
| स० | वातप्रमी | वातप्रम्योः | वातप्रमीषु | अधि० |
| | हे वातप्रमीः | हे वातप्रम्यौ | हे वातप्रम्यः | सम्बो० |

[ २९ ] ईकारान्तः पुंल्लिङ्गो 'ययी'[5] शब्दः ( मार्ग )

| | | | | |
|---|---|---|---|---|
| प्र० | ययी | यय्यौ | यय्यः | कर्ता |
| द्वि० | ययीम् | यय्यौ | ययीन् | कर्म |

एवं यय्या, ययीभ्याम्, ययीभिः, इत्यादि 'वातप्रमी'वत् ।

---

(१) ईप्रत्ययान्तस्य धातुत्वाभावेन 'एरनेकाचः' इत्यस्याप्रवृत्त्या 'अमि पूर्वः' इति पूर्वरूपे सिद्धम् । (२) पूर्वसवर्णदीर्घे 'तस्माच्छसोनः' इति नत्वम् । (३) सवर्णदीर्घः । (४) वातशब्दे उपपदे माधातोः ईप्रत्ययः स्यात् स च कित् इत्यर्थक "वातप्रमी" इत्युणादिसूत्रेण माधातोः ईप्रत्यये तस्य किद्भावे च कृते 'आतो लोप इटि च' इत्यालोपे उपपदसमासे तस्मात् सुबुत्पत्तिः । शेषं 'पपी' वत् ।

[ ३० ] ईकारान्तः पुंल्लिङ्गो 'बहुश्रेयसी' शब्दः
(अधिक प्रसस्त [ कल्याण करने वाली ] स्त्रियां हैं जिसको ऐसा पुरुष)

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | बहुश्रेयसी[1] | बहुश्रेयस्यौ | बहुश्रेयस्यः | कर्त्ता |
| द्वि० | बहुश्रेयसीम् | बहुश्रेयस्यौ | बहुश्रेयसीन् | कर्म |
| तृ० | बहुश्रेयस्या | बहुश्रेयसीभ्याम् | बहुश्रेयसीभिः | करण |
| च० | बहुश्रेयस्यै[2] | बहुश्रेयसीभ्याम् | बहुश्रेयसीभ्यः | सम्प्र० |
| पं० | बहुश्रेयस्याः | बहुश्रेयसीभ्याम् | बहुश्रेयसीभ्यः | अपा० |
| ष० | बहुश्रेयस्याः[3] | बहुश्रेयस्योः | बहुश्रेयसीनाम्[4] | सम्ब० |
| स० | बहुश्रेयस्याम्[5] | बहुश्रेयस्योः | बहुश्रेयसीषु | अधि० |
| | हे बहुश्रेयसि[6] | हे बहुश्रेयस्यौ | हे बहुश्रेयस्यः | सम्बो० |

[ ३१ ] ईकारान्तः पुंल्लिङ्गः 'अतिलक्ष्मी' शब्दः
( लक्ष्मी को अतिक्रमण करने वाला पुरुष )

| | | | | |
|---|---|---|---|---|
| प्र० | अतिलक्ष्मीः[7] | अतिलक्ष्म्यौ | अतिलक्ष्म्यः | कर्त्ता |
| द्वि० | अतिलक्ष्मीम् | अतिलक्ष्म्यौ | अतिलक्ष्मीन् | कर्म |
| तृ० | अतिलक्ष्म्या | अतिलक्ष्मीभ्याम् | अतिलक्ष्मीभिः | करण |
| च० | अतिलक्ष्म्यै | अतिलक्ष्मीभ्याम् | अतिलक्ष्मीभ्यः | सम्प्र० |

---

(१) बह्वयः श्रेयस्यः (अतिप्रसस्ताः) स्त्रियः यस्य सः । 'स्त्रियाः पुंवदि'ति पुंवत्वम् । 'गोस्त्रियो'रिति ह्रस्वस्तु न ईयसुन्प्रत्ययान्तत्वेन 'ईयसो बहुव्रीहेर्नेति वाच्यम्' इति निषेधात् । ङीबन्तत्वात् हल्ङ्यादिति सुलोपः । (२–३) 'प्रथमलिङ्गग्रहणञ्च' । 'आणनद्याः । 'आटश्च' । 'इको यणचि' । (४) नद्यन्तत्वान्नुट् । (५) 'ङे राम्नद्याम्नीभ्यः' । अत्र नुट् तु न आटः परत्वेन तस्य बाधात् । (६) 'अम्बार्थनद्योर्ह्रस्व' । 'एङ् ह्रस्वात्सम्बुद्धेः' । (७) 'लक्षेर्मुट् च' इत्यौणादिकसूत्रेण लक्षधातोरीप्रत्यये तस्य मुटि च कृते लक्ष्मीशब्दः । लक्ष्मीमतिक्रान्तः इति विग्रहे 'अत्यादय' इत्यादिना समासे अङ्यन्तत्वेन स्त्रीप्रत्ययान्तत्वाभावात् उपसर्जनह्रस्वसुलोपौ न भवतः । अन्यत् सर्वं कार्यं बहुश्रेयसीवत् ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| पं० | अतिलक्ष्म्याः | अतिलक्ष्मीभ्याम् | अतिलक्ष्मीभ्यः | अपा० |
| ष० | अतिलक्ष्म्याः | अतिलक्ष्म्योः | अतिलक्ष्मीणाम् | सम्ब० |
| स० | अतिलक्ष्म्याम् | अतिलक्ष्म्योः | अतिलक्ष्मीषु | अधि० |
| | हे अतिलक्ष्मि | हे अतिलक्ष्म्यौ | हे अतिलक्ष्म्यः | सम्बो० |

[ ३२ ) ईकारान्तः पुंल्लिङ्गः 'कुमारी' शब्दः ( कुमारी का इच्छा करनेवाला या कुमारीके ऐसा आचरण करने वाला पुरुष )

| | | | | |
|---|---|---|---|---|
| प्र० | कुमारी[1] | कुमार्यौ[2] | कुमार्यः | कर्त्ता |
| द्वि० | कुमार्यम् | कुमार्यौ | कुमार्यः[3] | कर्म |
| तृ० | कुमार्या | कुमारीभ्याम् | कुमारीभिः | करण |
| च० | कुमार्यै | कुमारीभ्याम् | कुमारीभ्यः | सम्प्र० |
| पं० | कुमार्याः | कुमारीभ्याम् | कुमारीभ्यः | अपा० |
| ष० | कुमार्याः | कुमार्योः | कुमारीणाम् | सम्ब० |
| स० | कुमार्याम् | कुमार्योः | कुमारीषु | अधि० |
| | हे कुमारि | हे कुमार्यौ | हे कुमार्यः | सम्बो० |

[३३] प्रकृष्टा धीर्यस्य इति विग्रहे ईकारान्तः पुंल्लिङ्गः 'प्रधी' शब्दः ( उच्च बुद्धि वाला पुरुष )

| | | | | |
|---|---|---|---|---|
| प्र० | प्रधीः[4] | प्रध्यौ | प्रध्यः | कर्त्ता |
| द्वि० | प्रध्यम् | प्रध्यौ | प्रध्यः | कर्म |
| तृ० | प्रध्या | प्रधीभ्याम् | प्रधीभिः | करण |

---

(१) कुमारीमात्मनः इच्छतीत्यर्थे क्यच्, क्यजन्तस्य धातुत्वात् सुब्लुक्, ततः कर्तरि क्विप् अल्लोपयलोपौ कुमारीति । अथवा–कुमारीवाचरतीत्यर्थे क्विप् क्विबन्तस्य धातुत्वात् कर्तरि क्विप् कुमारीति रूपम् । (२–३) एरनेकाचोऽसंयोगपूर्वस्य' । कुमारीशब्दस्य 'बहुश्रेयसीशब्दापेक्षया अमूशसोरेव रूपे विशेषः इति बोध्यम् । (४) प्रकृष्टा धीर्यस्य इति विग्रहे प्रधी' शब्दः अङ्यन्तत्वान्नसुलोपः । शेषं क्विबन्तकुमारीशब्दवत् ।

| | एकवचन | द्विवचन | वहुवचन | |
|---|---|---|---|---|
| च० | प्रध्यै[1] | प्रधीभ्याम् | प्रधीभ्यः | सम्प्र० |
| पं० | प्रध्याः | प्रधीभ्याम् | प्रधीभ्यः | अपा० |
| ष० | प्रध्याः | प्रध्योः | प्रधीनाम्[2] | सम्ब० |
| स० | प्रध्याम् | प्रध्योः | प्रधीषु | अधि० |
| | हे प्रधि | हे प्रध्यौ | हे प्रध्यः | सम्बो० |

[ ३४ ] प्रध्यायतीति विग्रहे ईकारान्तः 'प्रधी' शब्दः ।

धात्वन्तोऽयम् ( उच्च ध्यानकरने वाला )

| | | | | |
|---|---|---|---|---|
| प्र० | प्रधीः[3] | प्रध्यौ[4] | प्रध्यः | कर्त्ता |
| द्वि० | प्रध्यम् | प्रध्यौ | प्रध्यः | कर्म |
| तृ० | प्रध्या | प्रधीभ्याम् | प्रधीभिः | करण |
| च० | प्रध्ये[5] | प्रधीभ्याम् | प्रधीभ्यः | सम्प्र० |
| पं० | प्रध्यः | प्रधीभ्याम् | प्रधीभ्यः | अपा० |
| ष० | प्रध्यः | प्रध्योः | प्रध्याम्[6] | सम्ब० |
| स० | प्रध्यि | प्रध्योः | प्रधीषु | अधि० |
| | हे प्रधीः | हे प्रध्यौ | हे प्रध्यः | सम्बो० |

**एवं वेगम् इच्छति इति-'वेगी' । 'जलपी' शब्दानामपि ज्ञेयम् ।**

---

(१) प्रकृष्टा धीर्यस्येति विग्रहे धीशब्दस्य स्त्रीत्वात् 'प्रथमलिङ्गग्रहणञ्च' इति नदीत्वान्नदीकार्यम्, एवंच ङसि-ङसादावपि कार्यं ज्ञेयम् । (२) नदीत्वान्नुटि । ( प्रकृष्टा च सा धीश्च प्रधीः, प्रकृष्टा धीर्यस्याः सा प्रधीः, इति विग्रहे वा स्त्री-लिङ्गेप्येवमेवेति वक्ष्यामः ) । (३) प्रध्यायतीति विग्रहे तु 'ध्यायतेः सम्प्रसारणञ्च' इति सूत्रेण ध्याधातोः क्विप् यकारस्य सम्प्रसारणमिकारः । 'हलः' इति दीर्घः धीरिति ततः कृदन्तत्वेन प्रातिपदिकत्वात् सुबुत्पत्तिः अङ्यन्तत्वान्न सुलोपः । (४) अजादौ सर्वत्र 'एरनेकाचः' इति यणेव । (५) अस्त्रीत्वान्नदीकार्यं न भवतीति विशेषः । (६) स्त्रीत्वाभावेन नदीत्वाऽभावात्, ह्रस्वान्तत्वाभावाच्च न नुट् ।

## [ २५ ] ईकारान्तः पुँल्लिङ्गः 'उन्नी' शब्दः ।

( अच्छी तरह से ले जाने वाला )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | [1]उन्नीः | [2]उन्न्यौ | उन्न्यः | कर्ता |
| द्वि० | उन्न्यम् | उन्न्यौ | उन्न्यः | कर्म |
| तृ० | उन्न्या | उन्नीभ्याम् | उन्नीभिः | करण |
| च० | उन्न्ये | उन्नीभ्याम् | उन्नीभ्यः | सम्प्र० |
| पं० | उन्न्यः | उन्नीभ्याम् | उन्नीभ्यः | अपा० |
| ष० | उन्न्यः | उन्न्योः | उन्न्याम् | सम्ब० |
| स० | [3]उन्न्याम् | उन्न्योः | उन्नीषु | अधि० |
| | हे उन्नीः | हे उन्न्यौ | हे उन्न्यः | सम्बो० |

## [ २६ ] ईकारान्तः पुँल्लिङ्गः 'ग्रामणी' शब्दः ।

( गांव का स्वामी अथवा गांव का मुखिया )

| | | | | |
|---|---|---|---|---|
| प्र० | [4]ग्रामणीः | [5]ग्रामण्यौ | ग्रामण्यः | कर्ता |
| द्वि० | ग्रामण्यम् | ग्रामण्यौ | ग्रामण्यः | कर्म |
| तृ० | ग्रामण्या | ग्रामणीभ्याम् | ग्रामणीभिः | करण |
| च० | ग्रामण्ये | ग्रामणीभ्याम् | ग्रामणीभ्यः | सम्प्र० |
| पं० | ग्रामण्यः | ग्रामणीभ्याम् | ग्रामणीभ्यः | अपा० |
| ष० | ग्रामण्यः | ग्रामण्योः | ग्रामण्याम् | सम्ब० |
| स० | ग्रामण्याम् | ग्रामण्योः | ग्रामणीषु | अधि० |

(१) उन्नयतीति=उन्नीः । 'सत्सूद्विषे'त्यादिना उत्पूर्वात् 'नी'धातोः क्विप् सुबुत्पत्तिः अङ्यन्तत्वान्न सुलोपः । (२) अजादौ 'एरनेकाचः' इति यण् । अस्त्रीत्वान्नदीकार्यं न । (३) 'ङेराम्नद्याम्नीभ्यः' इति सूत्रे 'नी' शब्दस्य पृथग्ग्रहणादाम् । आङ्गत्वेन 'पदाङ्गाधिकारे'ति परिभाषया नीशब्दान्तादपि आम्भवतीति बोध्यम् । (४) ग्रामं नयति=नियच्छतीति 'ग्रामणीः' क्विप् 'अग्रग्रामाभ्यां नयतेर्णो वाच्यः' इति णत्वम् । अङ्यन्तत्वान्न सुलोपः । (५) 'उन्नी' शब्दवत् साधनप्रकारो बोध्यः ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| | हे ग्रामणीः | हे ग्रामण्यौ | हे ग्रामण्यः | सम्बो० |

एवं सेनानी-अग्रणी-शब्दानामपि ।

[ ३७ ] ईकारान्तः पुँल्लिङ्गो 'नी' शब्दः ( ले जाने वाला )

| | | | | |
|---|---|---|---|---|
| प्र० | नीः[1] | नियौ[2] | नियः | कर्ता |
| द्वि० | नियम् | नियौ | नियः | कर्म |
| तृ० | निया | नीभ्याम् | नीभिः | करण |
| च० | निये | नीभ्याम् | नीभ्यः | सम्प्र० |
| पं० | नियः | नीभ्याम् | नीभ्यः | अपा० |
| ष० | नियः | नियोः | नियाम् | सम्ब० |
| स० | नियाम् | नियोः | नीषु | अधि० |
| | हे नीः | हे नियौ | हे नियः | सम्बो० |

[ ३८ ] ईकारान्तः पुँल्लिङ्गः 'सुश्री' शब्दः ( सुन्दर शोभावान् )

| | | | | |
|---|---|---|---|---|
| प्र० | सुश्रीः[3] | सुश्रियौ[4] | सुश्रियः | कर्त्ता |
| द्वि० | सुश्रियम् | सुश्रियौ | सुश्रियः | कर्म |
| तृ० | सुश्रिया | सुश्रीभ्याम् | सुश्रीभिः | करण |
| च० | सुश्रिये | सुश्रीभ्याम् | सुश्रीभ्यः | सम्प्र० |
| पं० | सुश्रियः | सुश्रीभ्याम् | सुश्रीभ्यः | अपा० |
| ष० | सुश्रियः | सुश्रियोः | सुश्रियाम् | सम्ब० |

---

(१) नयतीति=नीः नीधातोः क्विप् ङ्यन्तत्वाभावात् सुलोपो न । (२) अनेकाच्त्वाभावात् 'एरनेकाच' इति न यण् किन्तु 'अचि श्नुधात्वि'ति इयङ् । यजादिप्रत्यये परे सर्वत्र बोध्यम् । एतावानेव 'उन्नी' शब्दादस्य वैलक्षण्यम्बोध्यम् । (३) श्रयतीति श्रीः, श्रिञ् धातोः 'क्विब्वची'ति सूत्रेण क्विप् प्रकृतेर्दीर्घश्च। सुष्टु श्रयति, सु=शोभना श्रीरस्येति वा सुश्रीः । अङ्यन्तत्वान्न सुलोपः । (४) इवर्णस्य धात्ववयवसंयोगपूर्वकत्वात् अजादिप्रत्यये परे इयङेव भवतीति न यण् ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| स० | सुश्रियि | सुश्रियोः | सुश्रीषु | अधि० |
| | हे सुश्रीः[1] | हे सुश्रियौ | हे सुश्रियः | सम्बो० |

एवं यवं क्रीणातीति 'यवक्री' पामधी इत्यादयः।

[ २९ ] ईकारान्तः पुँल्लिङ्गः 'शुद्धधी' शब्दः ( विमल बुधिवाला )

| | | | | |
|---|---|---|---|---|
| प्र० | शुद्धधीः[2] | शुद्धधियौ[3] | शुद्धधियः | कर्त्ता |
| द्वि० | शुद्धधियम् | शुद्धधियौ | शुद्धधियः | कर्म |
| तृ० | शुद्धधिया | शुद्धधीभ्याम् | शुद्धधीभिः | करण |
| च० | शुद्धधिये | शुद्धधीभ्याम् | शुद्धधीभ्यः | सम्प्र० |
| पं० | शुद्धधियः | शुद्धधीभ्याम् | शुद्धधीभ्यः | अपा० |
| ष० | शुद्धधियः | शुद्धधियोः | शुद्धधियाम् | सम्ब० |
| स० | शुद्धधियि | शुद्धधियोः | शुद्धधीषु | अधि० |
| | हे शुद्धधीः | हे शुद्धधियौ | हे शुद्धधियः | सम्बो० |

(१) ह्रस्वान्तत्वाभावात् सुलोपो न। (२) शुद्धा धीर्यस्येति विग्रहः, अङ्यन्तत्वान्न सुलोपः। (३)'गतिकारकेतरपूर्वपदस्य यण्नेष्यते' इति वचनेन शुद्धशब्दस्य गतिकारकभिन्नत्वात् तत्पूर्वकस्य धीशब्दस्य न यणिति भावः। एवञ्च सुश्रीशब्दवदजादौ इयङेवेति। शुद्धं=ब्रह्म तं ध्यायतीति विग्रहे तु कारकपूर्वत्वेन स्यादेव यण्, एवञ्चाऽस्मिन्विग्रहे शुद्धध्यौ, शुद्धध्यः इत्यादि बोध्यम्। नच 'गतिकारके'ति पूर्वोक्तवार्तिकपाठे दुर्धियौ, दुर्धियः, इत्यादौ दुरित्यस्य ध्याधातुयोगे गतिश्च' इति सूत्रेण गतित्वात् यण् कुतो नेति चेत् सत्यम्। 'यत् क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञा' इति वचनात् दुःस्थिता धीर्येषामिति विग्रहे दुःशब्दार्थस्य (दुष्टत्वस्य) स्थाधात्वर्थेऽन्वयात् ध्याधात्वर्थेऽन्वयाभावेन गतित्वाभावात्। वृश्चिकभियौ, वृश्चिकभियः इत्यत्राऽपि यण् न शंक्यः, 'विवक्षातः कारकाणि भवन्ति' इति वचनादुक्तप्रयोगे बुद्धिकृताऽपादानस्याऽविवक्षणेन वृश्चिकस्य भीः 'वृश्चिकभीः' इति सम्बन्धसामान्ये षष्ठीसमासे 'षष्ठयाः कारकत्वं न' इति कारकत्वाभावात्।

[४०] ईकारान्तः पुँल्लिङ्गः 'सुधी' शब्दः (सुन्दर ध्यान करने वाला (पण्डित)

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | सुधीः[1] | सुधियौ[2] | सुधियः | कर्त्ता |
| द्वि | सुधियम् | सुधियौ | सुधियः | कर्म |
| तृ० | सुधिया | सुधीभ्याम् | सुधीभिः | करण |
| च० | सुधिये | सुधीभ्याम् | सुधीभ्यः | सम्प्र० |
| पं० | सुधियः | सुधीभ्याम् | सुधीभ्यः | अपा० |
| ष० | सुधियः | सुधियोः | सुधियाम् | सम्ब० |
| स० | सुधियि | सुधियोः | सुधीषु | अधि० |
| | हे सुधीः | हे सुधियौ | हे सुधियः | सम्बो० |

[ ४१ ] सखायमिच्छतीति विग्रहे ईकारान्तः पुंलिङ्गः 'सखी' शब्दः

( मित्र को चाहनेवाला )

| | | | | |
|---|---|---|---|---|
| प्र० | सखा[3] | सखायौ[4] | सखायः | कर्त्ता |
| द्वि० | सखायम् | सखायौ | सख्यः[5] | कर्म |
| तृ० | सख्या | सखीभ्याम् | सखीभिः | करण |
| च० | सख्ये | सखीभ्याम् | सखीभ्यः | सम्प्र० |
| पं० | सख्युः[6] | सखीभ्याम | सखीभ्यः | अपा० |

(१) सुष्टु ध्यायति, सु=शोभना धीर्यस्येति वा सुधीः । अव्यन्तत्वान्न सु-लोपः । (२) 'न भूसुधियोः' इति यणूनिषेधात् अजादौ सर्वत्र इयङ् । (३) सखायमिच्छतीत्यर्थे 'सुप आत्मनः' इति क्यचि 'अकृतसार्वधातुकयोरि'ति दीर्घे तिपि 'सखीयति' ततः क्विप् 'अतो लोपः' इति अकारस्य 'लोपोव्योरि'ति । यकारस्य च लोपः। यलोपे कर्तव्ये अलोपस्य स्थानिवत्वन्तु न 'नपदान्ते'ति निषेधात्, एवमल्लोपस्य स्थानिवत्वात् यणोपि न 'क्वौ लुप्तं न स्थानिवत्' इति निषेधात् । ततः सौ 'एकदेशविकृतमनन्यवत्' इति परिभाषया (स्थानिवद्भावेनेत्यर्थः) 'अनङ् सौ'इत्यनेन विधीयमानोऽनङादेशः ईदन्त 'सखी' शब्दस्यापि भवतीति (४) 'सख्युरसम्बुद्धौ । (५) 'एरनेकाचोऽसंयोगपूर्वस्य । (६) 'ख्यत्यात्परस्य' ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| ष० | सख्युः | सख्योः | सख्याम् | सम्ब० |
| स० | सख्यौ[1] | सख्योः | सखीषु | अधि० |
| | हे[2] सखीः | हे सखायौ | हे सखायः | सम्बो० |

[ ४२ ] ईकारान्तः पुंल्लिङ्गः 'सखी' शब्दः ( देवताओं को चाहने वाला ) (सह खेन प्रवर्तत इति सखः तमिच्छतीति सखीः[3])

| | | | | |
|---|---|---|---|---|
| प्र० | सखीः[4] | सख्यौ[5] | सख्यः | कर्त्ता |
| द्वि० | सख्यम् | सख्यौ | सख्यः | कर्म |
| तृ० | सख्या | सखीभ्याम् | सखीभिः | करण |
| च० | सख्ये | सखीभ्याम् | सखीभ्यः | सम्प्र० |
| पं० | सख्युः[6] | सखीभ्याम् | सखीभ्यः | अपा० |
| ष० | सख्युः | सख्योः | सख्याम् | सम्ब० |
| स० | सख्यि | सख्योः | सखीषु | अधि० |
| | हे सखीः | हे सख्यौ | हे सख्यः | सम्बो० |

एवं सुखी-सुतीः-लूनीः[7]-क्षामीः[8]-प्रस्तमीः[9]।

---

(१) 'औत्'। (२) ह्रस्वत्वाभावान्न गुणः। (३) खः=स्वर्गः, तेन सह प्रवर्तत इति विग्रहे 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः। 'वोपसर्जनस्य' इति सभावः। ततः सखमात्मान इच्छतीत्यर्थे क्यच् ईत्वम् क्विप् अल्लोपयलोपौ 'सखी' शब्दः (४) अङ्यन्तत्वान्न सुलोपः। अत्र 'सखी' शब्दे एकदेशविकृतन्यायेन ( स्थानिवद्भावेन ) सखशब्दस्यैवानयनम्भवेदिति नानङ्णिद्वद्भावौ भवतः (५) अजादौ 'एरनेकाचः' इति यणिति बोध्यम्। (६) 'ख्यत्यात्परस्य'। (७-९) लून् × क्तः, 'ल्वादिभ्यः' इति नत्वम्, क्यचि ईत्वादिः। क्षै × क्तः, आत्वं, 'क्षायो मः' इति मः क्यचि, ईत्वादिः। स्त्यै × क्तः, आत्वं 'प्रस्तोऽन्यतरस्याम्' इति मः 'स्त्यः प्रपूर्वस्य' इति सम्प्रसारणं, पूर्वरूपं, 'हलः' इति दीर्घः, क्यचि ईत्वादिः। एषां शब्दानामपि ङसि नत्वमत्वयोरसिद्धत्वात् 'ख्यत्यादित्युत्वं भवतीति ध्येयम्।

[४३] ईकारान्तः पुंल्लिङ्गः 'शुष्की' शब्दः ( निःसार को चाहने वाला )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | शुष्कीः[1] | शुष्कियौ[2] | शुष्कियः | कर्ता |
| द्वि० | शुष्कियम् | शुष्कियौ | शुष्कियः | कर्म |
| तृ० | शुष्किया | शुष्कीभ्याम् | शुष्कीभिः | करण |
| च० | शुष्किये | शुष्कीभ्याम् | शुष्कीभ्यः | सम्प्र० |
| पं० | शुष्कियः[3] | शुष्कीभ्याम् | शुष्कीभ्यः | अपा० |
| ष० | शुष्कियः | शुष्कियोः | शुष्कियाम् | सम्ब० |
| स० | शुष्कियि | शुष्कियोः | शुष्कीषु | अधि० |
| | हे शुष्कीः | हे शुष्कियौ | हे शुष्कियः | सम्बो० |

एवं पक्कीः, पक्कियौ, पक्कियः इत्यादि ।

[ ४४ ] उकारान्तः, पुँल्लिङ्गः 'शम्भु' शब्दः ( भगवान् शङ्कर )

| | | | | |
|---|---|---|---|---|
| प्र० | शम्भुः | शम्भू[4] | शम्भवः[5] | कर्ता |
| द्वि० | शम्भुम्[6] | शम्भू | शम्भून् | कर्म |
| तृ० | शम्भुना[7] | शम्भुभ्याम् | शम्भुभिः | करण० |
| च० | शम्भवे[8] | शम्भुभ्याम् | शम्भुभ्यः | सम्प्र० |
| पं० | शम्भोः | शम्भुभ्याम् | शम्भुभ्यः | अपा० |
| ष० | शम्भोः[9] | शम्भ्वोः | शम्भूनाम् | सम्ब० |
| स० | शम्भौ[10] | शम्भ्वोः | शम्भुषु | अधि० |
| | हे शम्भो[11] | हे शम्भू | हे शम्भवः | सम्बो० |

एवं विष्णु-वायु-भानु-सानु-मानु-पांसु-प्रभृतयः ।

---

(१) शुष्धातोःक्तः 'शुषः कः' इति निष्ठातस्य कः । शुष्कमात्मन इच्छतीत्यर्थे क्यचि, ईत्वम् । पुनः क्यजन्तात् क्विप् अल्लोपयलोपौ 'शुष्की'रिति । अप्यन्तत्वान्न सुलोपः । (२) संयोगपूर्वकत्वान्न यण्, किन्त्वजादौ सर्वत्रेयङिति बोध्यम् । (३) कृतयणादेशत्वाभावेन कत्वस्यासिद्धत्वात् 'ख्यत्यादि'त्युत्वन्न । एवं 'पक्कीः' इत्यत्र "पचो वः" इति निष्ठातस्य वत्वम्बोध्यम् । (४) प्रथमयोः पूर्वसवर्णः । (५) जसि च । (६) अमि पूर्वः । (७) 'शेषो घ्यसखि' । आङो नाऽस्त्रियाम्' । (८) घेर्ङिति' । (९) 'ङसिङसोश्च । (१०) 'अच्च घेः' । (११) 'ह्रस्वस्य' गुणः ।

## [ ४५ ] उकारान्तः पुंलिङ्गः 'क्रोष्टु' शब्दः ( गीदड़ )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | क्रोष्टा[1] | क्रोष्टारौ[2] | क्रोष्टारः | कर्ता |
| द्वि० | क्रोष्टारम् | क्रोष्टारौ | क्रोष्टून् | कर्म |
| तृ० | { क्रोष्ट्रा[3] / क्रोष्टुना | क्रोष्टुभ्याम् | क्रोष्टुभिः | करण |
| च० | { क्रोष्ट्रे / क्रोष्टवे | क्रोष्टुभ्याम् | क्रोष्टुभ्यः | सम्प्र० |
| पं० | { क्रोष्टुः[4] / क्रोष्टोः | क्रोष्टुभ्याम् | क्रोष्टुभ्यः | अपा० |
| ष० | { क्रोष्टुः[5] / क्रोष्टोः | क्रोष्ट्रोः / क्रोष्ट्वोः | क्रोष्टूनाम्[6] | सम्ब० |
| स० | { क्रोष्टरि[7] / क्रोष्टौ | क्रोष्ट्रोः / क्रोष्ट्वोः | क्रोष्टुषु | अधि० |
| | हे क्रोष्टो | हे क्रोष्टारौ | हे क्रोष्टारः | सम्बो० |

## [ ४६ ] ऊकारान्तः पुंलिङ्गः 'हूहू' शब्दः ( गन्धर्व )

| | | | | |
|---|---|---|---|---|
| प्र० | हूहूः[8] | हूह्वौ[9] | हूह्वः | कर्ता |
| द्वि० | हूहूम् | हूह्वौ | हूहून् | कर्म |

---

(१) क्रुश्धातोः 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' इति तुन्, प्रत्यये 'व्रश्चे'ति षत्वस्य ष्टुत्वेन टकारे 'क्रोष्टु'शब्दः, ततः 'तृज्वत्क्रोष्टुः'। ऋदुशनस्पुरुदंसोऽनेहसां च। 'अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्'। (२) 'ऋतो ङिसर्वनामस्थानयोः। (३) विभाषातृतीयादिष्वचि'। यण्। तृज्वद्भावाऽभावपक्षे 'शम्भुवत् घिसंज्ञादिकार्यं बोध्यम्। (५) 'ऋत उत्'। 'रात्सस्य'। (६) 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इति तृज्वत्वं बाधित्वा नुटि कृते 'नामी'ति दीर्घः। (७) 'ऋतो ङिसर्वनामस्थानयोः'। तृज्वत्वाऽभावपक्षे हलादौ च 'शम्भु'वत् कार्यं बोध्यम्। (८) अव्युत्पन्नप्रातिपदिकमेतत्। (९) 'दीर्घाज्जसि चे'ति दीर्घनिषेधात् 'इको यणचो'ति यण्। एवंचाजादौ सर्वत्रानेन यणिति ध्येयम्।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| तृ० | हूह्वा | हूहूभ्याम् | हूहूभिः | करण |
| च० | हूह्वे | हूहूभ्याम् | हूहूभ्यः | सम्प्र० |
| पं० | हूह्वः | हूहूभ्याम् | हूहूभ्यः | अपा० |
| ष० | हूह्वः | हूह्वोः | हूह्वाम्[1] | सम्प्र० |
| स० | हूह्वि | हूह्वोः | हूहूषु | अधि० |
| | हे हूहूः | हे हूह्वौ | हे हूह्वः | सम्बो० |

[ ४७ ] ऊकारान्तः पुंलिङ्गः 'अतिचमू' शब्दः (सेनाको जीतनेवाला)

| | | | | |
|---|---|---|---|---|
| प्र० | अतिचमूः[2] | अतिचम्वौ | अतिचम्वः | कर्त्ता |
| द्वि० | अतिचमूम् | अतिचम्वौ | अतिचमून् | कर्म |
| तृ० | अतिचम्वा | अतिचमूभ्याम् | अतिचमूभिः | करण |
| च० | अतिचम्वै[3] | अतिचमूभ्याम् | अतिचमूभ्यः | सम्प्र० |
| पं० | अतिचम्वाः | अतिचमूभ्याम् | अतिचमूभ्यः | अपा० |
| ष० | अतिम्वाः | अतिचम्वोः | अतिचमूनाम् | सम्ब० |
| स० | अतिचम्वाम् | अतिचम्वोः | अतिचमूषु | अधि० |
| | हे अतिचमु | हे अतिचम्वौ | हे अतिचम्वः | सम्बो० |

[ ४८ ] ऊकारान्तः पुँल्लिङ्गः 'खलपू' शब्दः
( खलिहान को बुहारनेवाला )

| | | | | |
|---|---|---|---|---|
| प्र० | खलपूः[4] | खलप्वौ[5] | खलप्वः | कर्त्ता |
| द्वि० | खलप्वम् | खलप्वौ | खलप्वः | कर्म |
| तृ० | खलप्वा | खलपूभ्याम् | खलपूभिः | करण |

(१) ह्रस्वान्तत्वाभावान्न नुट् । (२) चमूमतिक्रान्तः 'अतिचमूः' स्त्रीप्रत्ययान्तत्वाभावान्न सुलोपः । (३) 'प्रथमलिङ्गग्रहणञ्च' अत्र सर्वस्मिन् प्रयोगे 'बहुश्रेयसीशब्दवत् नदीकार्यं बोध्यम् । (४) खलं पुनातीति विग्रहे पूञः क्विप् । (५) 'ओः सुपि' अत्र 'गतिकारकेतरपूर्वपदस्य यण् नेष्यते' इति वार्तिकमप्यनुवर्तत इति बोध्यम् । अत्र प्रयोगे उवङि प्राप्ते कारकपूर्वकत्वादनेन यण् । इह अजादौ सर्वत्र 'एरनेकाचः' इति यणोऽसम्भवात् उवङि प्राप्ते अनेन यण् इति

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| च० | खलप्वे | खलपूभ्याम् | खलपूभ्यः | सम्प्र० |
| पं० | खलप्वः | खलपूभ्याम् | खलपूभ्यः | अपा० |
| ष० | खलप्वः | खलप्वोः | खलप्वाम् | सम्ब० |
| स० | खलप्वि | खलप्वोः | खलपूषु | अधि० |
| | हे खलपूः | हे खलप्वौ | हे खलप्वः | सम्बो० |

एवं सुलू-केदारलू-आदयः ऊदन्ताः ।

[ ४९ ] ऊकारान्तः पुँल्लिङ्गः 'स्वभू' शब्दः ( ब्रह्मा )

| | | | | |
|---|---|---|---|---|
| प्र० | स्वभूः[1] | स्वभुवौ[2] | स्वभुवः | कर्त्ता |
| द्वि० | स्वभुवम् | स्वभुवौ | स्वभुवः | कर्म |
| तृ० | स्वभुवा | स्वभूभ्याम् | स्वभूभिः | करण |
| च० | स्वभुवे | स्वभूभ्याम् | स्वभूभ्यः | सम्प्र० |
| पं० | स्वभुवः | स्वभूभ्याम् | स्वभूभ्यः | अपा० |
| ष० | स्वभुवः | स्वभुवोः | स्वभुवाम् | सम्ब० |
| स० | स्वभुवि | स्वभुवोः | स्वभूषु | अधि० |
| | हे स्वभूः | हे स्वभुवौ | हे स्वभुवः | सम्बो० |

एवं कटप्रू-स्वयम्भू-लू-दृग्भू-काराभू-प्रभृतयः ।
( एषां स्त्रियामप्येवमेव रूपाणि भवन्ति )

[ ५० ] ऊकारान्तः पुँल्लिङ्गो 'वर्षाभू' शब्दः ( मेढ़क )

| | | | | |
|---|---|---|---|---|
| प्र० | वर्षाभूः | वर्षाभ्वौ[3] | वर्षाभ्वः | कर्त्ता |

---

निश्चितम् । इयङुवङौ, इति । 'एरनेकाचः' इति, 'ओः सुपि' इति च सर्वत्र पूर्वरूप-सवर्णदीर्घापवादाः भवन्तीति न विस्मर्तव्यम् । (१) स्वस्माद्भवतीति स्वभूः भूधातोः क्विप् । (२) कारकपूर्वकत्वात् यणि प्राप्ते 'न भूसुधियोः' इति निषेधात्-उवङ् । (३) वर्षासु भवतीति वर्षाभूः । ( वर्षा शब्दो नित्यस्त्रिलिङ्गबहुवचनान्तः ) 'न भूसुधियोः' इति यण्निषेधे 'वर्षाभ्वश्च' इति यण् । इदमजाद्यत्र सर्वत्र भवतीति सिद्धान्तः ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| द्वि० | वर्षाभ्वम् | वर्षाभ्वौ | वर्षाभ्वः | कर्म |
| तृ० | वर्षाभ्वा | वर्षाभूभ्याम् | वर्षाभूभिः | करण |
| च० | वर्षाभ्वे | वर्षाभूभ्याम् | वर्षाभूभ्यः | सम्प्र० |
| पं० | वर्षाभ्वः | वर्षाभूभ्याम् | वर्षाभूभ्यः | अपा० |
| ष० | वर्षाभ्वः | वर्षाभ्वोः | वर्षाभ्वाम् | सम्ब० |
| स० | वर्षाभ्वि | वर्षाभ्वोः | वर्षाभूषु | अधि० |
| | हे वर्षाभूः | हे वर्षाभ्वौ | हे वर्षाभ्वः | सम्बो० |

[ ५१ ] ऊकारान्तः पुँल्लिङ्गो 'दृम्भू' शब्दः ( ग्रन्थकार )

| | | | | |
|---|---|---|---|---|
| प्र० | दृम्भूः[1] | दृम्भ्वौ[2] | दृम्भ्वः | कर्ता |
| द्वि० | दृम्भूम्[3] | दृम्भ्वौ | दृम्भून्[4] | कर्म |
| तृ० | दृम्भ्वा | दृम्भूभ्याम् | दृम्भूभिः | करण |
| च० | दृम्भ्वे | दृम्भूभ्याम् | दृम्भूभ्यः | सम्प्र० |
| पं० | दृम्भ्वः | दृम्भूभ्याम् | दृम्भूभ्यः | अपा० |
| ष० | दृम्भ्वः | दृम्भ्वोः | दृम्भ्वाम् | सम्ब० |
| स० | दृम्भ्वि | दृम्भ्वोः | दृम्भूषु | अधि० |
| | हे दृम्भूः | हे दृम्भ्वौ | हे दृम्भ्वः | सम्बो० |

---

( १ ) दृम्भतीति दृम्भूः। 'अन्दू–दृम्भू–जम्बूकफेलूककर्कन्धू–दिधिषू' इत्युणादिसूत्रेण 'दृभी ग्रन्थे' इत्यस्माद्धातोः निपातनात् ऊप्रत्ययः नुमागमश्च भवति। ततः नुमो नकारस्य 'नश्चापदान्तस्ये'त्यनुस्वारः 'अनुस्वारस्य ययी'ति तस्य परसवर्णो मकारः 'दृम्भू' इति। ( २ ) ऊकारस्य धात्ववयवत्वाभावेन उवङा-देशस्य 'ओः सुपि' इति यणादेशस्य च प्रवृत्त्यभावात् 'प्रथमयोः पूर्वसवर्णः' इति दीर्घः प्राप्तः तस्य 'दीर्घाज्जसि च' इति निषेधे 'इको यणचि' इत्यनेन यण्। एवम-जादौ सर्वत्र 'इको यणचि' इत्यनेन दृम्भूशब्दे यणादेशो बोध्यः। 'दृन्करे'ति यण् तु न 'अर्थवद्ग्रहणे'ति परिभाषया दृम्भूघटकभूशब्दस्याऽनर्थकत्वेनाग्रहणात्। ( ३ ) यणं बाधित्वा 'अमिपूर्वः'। ( ४ ) यणं बाधित्वा पूर्वसवर्णदीर्घे नत्वम्।

[ ५२ ] ऊकारान्तः पुँल्लिङ्गो 'दृन्भू' शब्दः ( तरु, सर्प वा वानर )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | दृन्भूः[1] | दृन्भ्वौ[2] | दृन्भ्वः | कर्त्ता |
| द्वि० | दृन्भ्वम्[3] | दृन्भ्वौ | दृन्भ्वः[4] | कर्म |
| तृ० | दृन्भ्वा | दृन्भूभ्याम् | दृन्भूभिः | करण |
| च० | दृन्भ्वे | दृन्भूभ्याम् | दृन्भूभ्यः | सम्प्र० |
| पं० | दृन्भ्वः | दृन्भूभ्याम् | दृन्भूभ्यः | अपा० |
| ष० | दृन्भ्वः | दृन्भ्वोः | दृन्भ्वाम् | सम्ब० |
| स० | दृन्भ्वि | दृन्भ्वोः | दृन्भूषु | अधि० |
| | हे दृन्भूः | हे दृन्भ्वौ | हे दृन्भ्वः | सम्बो० |

एवं सुलू-करभू-पुनर्भू-इत्यादयः। (एषां स्त्रियामप्येवमेव रूपं भवति

[ ५३ ] ऋकारान्तः पुँल्लिङ्गो 'धातृ' शब्दः ( रक्षक, ब्रह्मा )

| | | | | |
|---|---|---|---|---|
| प्र० | धाता[5] | धातारौ[6] | धातारः | कर्त्ता |
| द्वि० | धातारम् | धातारौ | धातॄन्[7] | कर्म |
| तृ० | धात्रा[8] | धातृभ्याम् | धातृभिः | करण |
| च० | धात्रे[9] | धातृभ्याम् | धातृभ्यः | सम्प्र० |

---

(१) 'दृन्' इति नान्तमव्ययं हिंसायां वर्तते, तस्मिन्नुपपदे भूधातोः क्विप्। दृन्=हिंसां, भवते=प्राप्नोतीति विग्रहः। स्वाभाविक एवात्र नकारः, अत एव तस्यापदान्तत्वात् 'नश्चापदान्तस्ये'ति नानुस्वारः। परसवर्णश्च न। (२) 'न भूसुधियोः' इति यणनिषेधे प्राप्ते 'दृन्करपुनः पूर्वस्य भुवो यण्वक्तव्यः'। (३) पूर्वरूपं बाधित्वा यण्। (४) पूर्वसवर्णदीर्घं बाधित्वा यण्। (५) दधातीति धाता 'डुधाञ् धारणपोषणयोः' तस्मात् तृच् तृन्वा। क्रोष्टु शब्दवत् अनङ्-दीर्घ-सुलोप-नलोपाः। (६) 'ऋतो ङिसर्वनामस्थानयोः' इति गुणे 'अप्तृन्वि'ति दीर्घः। ननु धातृशब्दस्यौणादिकशंसिक्षदादितृन्तृजन्तत्वात् 'अप्तृन्ति'ति दीर्घो न स्यात्, 'औणादिकेषु नप्त्रादिसप्तानामेव तृन्तृजन्तानां दीर्घः' इति वक्ष्यमाणनियमस्य जागरूकत्वादिति चेन्न। धाञ् धातोः शंसिक्षदादित्वकल्पनायां मानाभावेनधातृशब्दस्यौणादिकत्वाऽभावात्। (७) पूर्वसवर्णदीर्घः नत्वम्। (८-९) 'इको यणचि'।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| पं० | धातुः[1] | धातृभ्याम् | धातृभ्यः | अपा० |
| ष० | धातुः[2] | धात्रोः | धातॄणाम्[3] | सम्ब० |
| स० | धातरि | धात्रोः | धातृषु | अधि० |
| | हे धातः | हे धातारौ | हे धातारः | सम्बो० |

एवं नप्तृ-नेष्टृ-त्वष्टृ-क्षतृ-होतृ-पोतृ-प्रशास्तृ-ज्ञातृ-उद्गातृ-नेतृ-प्रभृतयः।

[ ५४ ] ऋकारान्तः पुंलिङ्गः 'पितृ' शब्दः ( पिता )

| | | | | |
|---|---|---|---|---|
| ।० | पिता[4] | पितरौ[5] | पितरः | कर्त्ता |
| द्वि० | पितरम् | पितरौ | पितॄन् | कर्म |
| तृ० | पित्रा | पितृभ्याम् | पितृभिः | करण |
| च० | पित्रे | पितृभ्याम् | पितृभ्यः | सम्प्र० |
| ।० | पितुः | पितृभ्याम् | पितृभ्यः | अपा० |
| ।० | पितुः | पित्रोः | पितॄणाम् | सम्ब० |
| ।० | पितरि | पित्रोः | पितृषु | अधि० |
| | हे पितः | हे पितरौ | हे पितरः | सम्बो० |

---

(१-२) 'ऋत उत्'। 'रात्सस्य'। विसर्गः। (३) 'ह्रस्वनद्यापो नुट्' 'नामि' इति दीर्घः। 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति णत्वम्। (४) पातीति पेता, पाधातोः 'नप्तृ-नेष्टृ-त्वष्टृ-होतृ-पोतृ-भ्रातृ-जामातृ-मातृ-पितृ-दुहितृ' त्युणादिसूत्रेण निपातनात् तृचि आकारस्य इत्वे च 'पितृ'शब्दः,तस्मात् सौ धातृवत् अनङ्-दीर्घ-सुलोप-नलोपादिकार्यं ज्ञेयम्। (५) 'ऋतो ङि'ति गुणः। 'अप्तृन्नि'ति दीर्घस्तु न तप्त्रादिग्रहणस्य नियमार्थत्वात्, तथाहि—व्युत्पत्तिपक्षे तृन्नन्तत्वात् तृजन्तत्वाद्वा दीर्घसिद्धे नप्त्रादिग्रहणं व्यर्थं, तदेव व्यर्थीभूय ज्ञापयति-'उणादिनिष्पन्नानां तृन्तृच्प्रत्ययान्तानां दीर्घश्चेत् नप्त्रादिसप्तानामेव' तेन पितृ-भ्रातृ-मात्रादीनां दीर्घो न। उणादिनिष्पन्नानामित्युक्तत्वात् कर्ता, कर्त्तारौ, कर्तारः इत्यादौ नाऽव्याप्तिः। अव्युत्पत्तिपक्षे तु अप्-तृन्-तृज द [illegible] दीर्घ शंकैव नास्तीति। भावः। अन्यत् कार्यं धातृशब्दज्ञेयम्।

### [ ५५ ] ऋकारान्तः पुंल्लिङ्गो 'भ्रातृ' शब्दः ( भाई )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | भ्राता[1] | भ्रातरौ | भ्रातरः | कर्त्ता |
| द्वि० | भ्रातरम् | भ्रातरौ | भ्रातॄन् | कर्म |
| तृ० | भ्रात्रा | भ्रातृभ्याम् | भ्रातृभिः | करण |
| च० | भ्रात्रे | भ्रातृभ्याम् | भ्रातृभ्यः | सम्प्र० |
| पं० | भ्रातुः | भ्रातृभ्याम् | भ्रातृभ्यः | अपा० |
| ष० | भ्रातुः | भ्रात्रोः | भ्रातॄणाम् | सम्ब० |
| स० | भ्रातरि | भ्रात्रोः | भ्रातृषु | अधि० |
| | हे भ्रातः | हे भ्रातरौ | हे भ्रातरः | सम्बो० |

### [ ५६ ] ऋकारान्तः पुंल्लिङ्गो 'जामातृ' शब्दः ( जमाय बाबू )

| | | | | |
|---|---|---|---|---|
| प्र० | जामाता[2] | जामातरौ | जामातरः | कर्त्ता |
| द्वि | जामातरम् | जामातरौ | जामातॄन् | कर्म |
| तृ० | जामात्रा | जामातृभ्याम् | जामातृभिः | करण |
| च० | जामात्रे | जामातृभ्याम् | जामातृभ्यः | सम्प्र० |
| पं० | जामातुः | जामातृभ्याम् | जामातृभ्यः | अपा० |
| ष० | जामातुः | जामात्रोः | जामातॄणाम् | सम्ब० |
| स० | जामातरि | जामात्रोः | जामातृषु | अधि० |
| | हे जामातः | हे जामातरौ | हे जामातरः | सम्बो० |

### [ ५७ ] ऋकारान्तः पुंल्लिङ्गः 'नृ' शब्दः ( मनुष्य )

| | | | | |
|---|---|---|---|---|
| प्र० | ना[3] | नरौ[4] | नरः | कर्त्ता |

---

(१) भ्राजते इति भ्राता, 'नप्तृ-नेष्टृ' इत्युणादिसूत्रेण निपातनात् भ्राजेस्तृच् जलोपश्च। अन्यत् पितृ शब्दवत्। (२) जायां मातीति जामाता, उक्तोणादिसूत्रेण निपातनात्तृच् यलोपश्च। अन्यत् कार्यं भ्रातृवत् (३) 'नयतेर्डिच्च' इति ऋप्रत्ययान्तो नृशब्दः 'ऋदुशनस्' इत्यनङ्। 'अप्तृन्नि'ति सूत्रेऽनन्तर्भावात् 'सर्वनामस्थाने चे'ति नान्तत्वप्रयुक्तदीर्घे 'हल्ङ्यादि'ति सुलोपे नलोपः। (४) 'ऋतो ङी'ति गुणः।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| द्वि० | नरम् | नरौ | नॄन्[1] | कर्म |
| तृ० | त्रा[2] | नृभ्याम् | नृभिः | करण |
| च० | त्रे | नृभ्याम् | नृभ्यः | सम्प्र० |
| पं० | नुः[3] | नृभ्याम् | नृभ्यः | अपा० |
| ष० | नुः | त्रोः | नॄणाम्[4] / नृणाम् | सम्ब० |
| स० | नरि | त्रोः | नृषु | अधि० |
| | हे नः | हे नरौ | हे नरः | सम्बो० |

[ ५८ ] ऋकारः पुंल्लिङ्गः 'ऋ' शब्दः ( वेद—माता )

| | | | | |
|---|---|---|---|---|
| प्र० | आ[5] | अरौ | अरः | कर्त्ता |
| द्वि० | अरम् | अरौ | ॠन् | कर्म |
| तृ० | रा | ऋभ्याम् | ऋभिः | करण |
| च० | रे | ऋभ्याम् | ऋभ्यः | सम्प्र० |
| पं० | उः | ऋभ्याम् | ऋभ्यः | अपा० |
| ष० | उः | रोः | ॠणाम् | सम्ब० |
| स० | अरि | रोः | ऋषु | अधि० |
| | हे अः | हे अरौ | हे अरः | सम्बो० |

[ ५९ ] ॠकारान्तः पुंल्लिङ्गः 'कॄ' शब्दः ( कॄ धातु )

| | | | | |
|---|---|---|---|---|
| प्र० | कीः[6] | किरौ[7] | किरः | कर्त्ता |
| द्वि० | किरम् | किरौ | किरः | कर्म |

---

(१) पूर्वसवर्णदीर्घे नत्वम् । (२) टादावचि यण् । (३) ङसि-ङसोः 'ऋत उत्' इत्युत्वे 'रात्सस्य' इति सलोपे विसर्गः । (४) नुटि 'नृ च' इति दीर्घविकल्पे 'ऋवर्णान्नस्येति' णत्वम् । (५) प्रसङ्गादिदं लिखितं 'नृ' शब्दवत् साधनकार्यम्बोध्यम् । (६) 'कॄ विक्षेपे' इति धातुः तस्यानुकरणमेतत् 'कॄ' इति, प्रकृतवदनुकरणं भवति इति पक्षे 'ॠत इद्धातोः' इति इत्वे 'र्वोरुपधायाः' इति दीर्घे हल्ङ्यादिलोपे विसर्गः । (७) अपदान्तत्वात् 'र्वोरुपधायाः' इति न दीर्घः

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| तृ० | किरा | कीर्भ्याम्[1] | कीर्भिः | करण |
| च० | कीरे | कीर्भ्याम् | कीर्भ्यः | सम्प्र० |
| पं० | किरः | कीर्भ्याम् | कीर्भ्यः | अपा० |
| ष० | किरः | किरोः | किराम् | सम्ब० |
| स० | किरि | किरोः | कीर्षु | अधि० |
| | हे कीः | हे किरौ | हे किरः | सम्बो० |

[ ६० ] 'प्रकृतवदनुकरणम्' इत्यस्यानित्यत्वात् धातुत्वाभावेन, इत्वाभावपक्षे[2] 'कॄ' शब्दः

| | | | | |
|---|---|---|---|---|
| प्र० | कॄः[3] | क्रौ[4] | क्रः | कर्त्ता |
| द्वि० | कॄम् | क्रौ | कॄन् | कर्म |
| तृ० | क्रा | कॄभ्याम् | कॄभिः | करण |
| च० | क्रे | कॄभ्याम् | कॄभ्यः | सम्प्र० |
| पं० | क्रेः[5] | कॄभ्याम् | कॄभ्यः | अपा० |
| ष० | क्रः | क्रोः | क्राम्[6] | सम्ब० |
| स० | क्रि | क्रोः | कॄषु | अधि० |
| | हे कॄः | हे क्रौ | हे क्रः | सम्बो० |

[ ६१ ] ॠकारान्तः पुँल्लिङ्गः 'तॄ' शब्दः ( तॄ धातु )

| | | | | |
|---|---|---|---|---|
| प्र० | तीः[7] | तिरौ | तिरः | कर्त्ता |
| द्वि० | तिरम् | तिरौ | तिरः | कर्म |

---

(१) भ्यामादिषु 'स्वादिष्वि'ति पदत्वात् दीर्घः। अत्र सर्वेषु प्रयोगेषु 'ऋत इद्धातोः' इत्यनेन इत्वं बोध्यम्। (२) अनुकरणस्य धातुत्वाभावात 'ऋत इद्धातोः' इति इत्वाभावपक्षे सतीत्यर्थः। (३) 'ऋदुशनस' इति 'ऋतोङि' इति च तपरकरणात् कॄशब्दे अनङ्–गुणौ न। (४) अमि पूर्वरूपं शसि दीर्घं नत्वं च वर्जयित्वा अजादौ सर्वत्र यण्। (५) 'ऋत उत्' इत्यत्र तपरकरणादुत्वमपि नेति द्रष्टव्यम्, अत एव 'ग्रो यङि' इति निर्देशस्सङ्गच्छते। (६) दीर्घान्तत्वात् 'ह्रस्वनद्यापः' इति न नुट्। (७) ५९ कॄ शब्दवत् कार्यं बोध्यम्।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| तृ० | तिरा | तीर्भ्याम् | तीर्भिः | करण |
| च० | तिरे | तीर्भ्याम् | तीर्भ्यः | सम्प्र० |
| पं० | तिरः | तीर्भ्याम् | तीर्भ्यः | अपा० |
| ष० | तिरः | तिरोः | तिराम् | सम्ब० |
| स० | तिरि | तिरोः | तीर्षु | अधि० |
| | हे तीः | हे तिरौ | हे तिरः | सम्बो० |

[ ६२ ] प्रकृतिवदनुकरणमित्यस्यानित्यत्वात् धातुत्वाभावेन इत्वाभावेपक्षे 'तॄ' शब्दः

| | | | | |
|---|---|---|---|---|
| प्र० | तॄः[1] | त्रौ | त्रः | कर्त्ता |
| द्वि० | तॄम् | त्रौ | तॄन् | कर्म |
| तृ० | त्रा | तॄभ्याम | तॄभिः | करण |
| च० | त्रे | तॄभ्याम् | तॄभ्यः | सम्प्र० |
| पं० | त्रः[2] | तॄभ्याम् | तॄभ्यः | अपा० |
| ष० | त्रः | त्रोः | त्राम् | सम्ब० |
| स० | त्रि | त्रोः | तॄषु | अधि० |
| | हे तॄः | हे त्रौ | हे त्रः | सम्बो० |

[ ६३ ] ऌकारः पुंल्लिङ्गः 'ऌ' शब्दः ( देव—माता )

| | | | | |
|---|---|---|---|---|
| प्र० | आ[3] | अलौ[4] | अलः | कर्त्ता |
| द्वि० | अलम् | अलौ | ॠन्[5] | कर्म |
| तृ० | ला[6] | ऌभ्याम् | ऌभिः | करण |

(१) ६० 'कॄ' शब्दवत् कार्यं ज्ञेयम्' । अत्राऽपि अमि पूर्वरूपं शसि दीर्घ नत्वं च वर्जयित्वा सर्वत्र यण् स्यादिति ध्येयम् । (२) ६० कॄ वत् कार्यं ज्ञेयम् । (३) प्रसङ्गात् ऌ शब्दस्य रूपं लिखितम् । ऌ शब्दात् सौ ऋऌवर्णयोः सावर्ण्यात् 'ऋदुसनस' इत्यनङ्, दीर्घ, सुलोप, नलोपाः । (४) 'ऋतो ङी'ति गुणोऽकारः लपरः । (५) ऌवर्णस्य दीर्घाभावात् ऋर्वण एव दीर्घः । (६) टादावचि यण् ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| च० | ले | ऌभ्याम् | ऌभ्यः | सम्प्र० |
| पं० | उल्[1] | ऌभ्याम् | ऌभ्यः | अपा० |
| ष० | उल् | लोः | ॠणाम्[2] | सम्ब० |
| स० | अलि | लोः | ऌषु | अधि० |
| | हे अल् | हे अलौ | हे अलः | सम्बो० |

[ ६४ ] ऌकारान्तः 'गम्लृ' शब्दः ।

| | | | | |
|---|---|---|---|---|
| प्र० | गमा[3] | गमलौ | गमलः | कर्त्ता |
| द्वि० | गमलम् | गमलौ | गमॄन् | कर्म |
| तृ० | गम्ला | गम्लृभ्याम् | गम्लृभिः | करण |
| च० | गम्ले | गम्लृभ्याम् | गम्लृभ्य | सम्प्र० |
| पं० | गमुल् | गम्लृभ्याम् | गम्लृभ्यः | अपा० |
| ष० | गमुल् | गम्लोः | गमॄणाम् | सम्ब० |
| स० | गमलि | गम्लोः | गम्लृषु | अधि० |
| | हे गमल् | हे गमलौ | हे गमलः | सम्बो० |

[ ६५ ] ऌकारान्तः पुंलिङ्गः 'शक्ऌ' शब्दः ।

| | | | | |
|---|---|---|---|---|
| प्र० | शका[4] | शक्लौ | शक्लः | कर्त्ता |
| द्वि० | शक्लम् | शक्लौ | शकॄन् | कर्म |
| तृ० | शक्ला | शक्लृभ्याम् | शक्लृभिः | करण |
| च० | शक्ले | शक्लृभ्याम् | शक्लृभ्यः | सम्प्र० |
| पं० | शकुल् | शक्लृभ्याम् | शक्लृभ्यः | अपा० |
| ष० | शकुल् | शक्लोः | शकॄणाम् | सम्ब० |

---

(१) ङसि ङसोः 'ऋत उत्' । संयोगान्तलोपः । (२) सावर्ण्यात् ऌवर्णस्य ऋवर्ण एव दीर्घः । 'ऋवर्णान्नस्ये'ति णत्वम् । (३) 'गम्लृ गतौ' इत्यस्यानुकरणम् । ऌ वत् कार्यं ज्ञेयम् । (४) 'शक्ऌ शक्तौ' इत्यस्य अनुकरणमेतत् । ऌशब्दवत् कार्यं बोध्यम् ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| स० | शकलि | शकलोः | शकलेषु | अधि० |
| | हे शकल् | हे शकलौ | हे शकलः | सम्बो० |

[ ६६ ] एकारान्तः पुंल्लिङ्गः 'से' शब्दः ।

( कामदेव अथवा लक्ष्मी के साथ रहने वाला )

| | | | | |
|---|---|---|---|---|
| प्र० | [1]सेः | सयौ | सयः[2] | कर्त्ता |
| द्वि० | सयम् | सयौ | सयः | कर्म |
| तृ० | सया | सेभ्याम् | सेभिः | करण |
| च० | सये | सेभ्याम् | सेभ्यः | सम्प्र० |
| पं० | [3]सेः | सेभ्याम् | सेभ्यः | अपा० |
| ष० | [4]सेः | सयोः | सयाम् | सम्ब० |
| स० | सयि | सयोः | सेषु | अधि० |
| | हे [5]से | हे सयौ | हे सयः | सम्बो० |

[६७] एकारान्तः पुंल्लिङ्ग 'स्मृते' शब्दः (लक्ष्मी को स्मरण करने वाला)

| | | | | |
|---|---|---|---|---|
| प्र० | [6]स्मृतेः | स्मृतयौ | स्मृतयः | कर्त्ता |
| द्वि० | स्मृतयम् | स्मृतयौ | स्मृतयः | कर्म |
| तृ० | स्मृतया | स्मृतेभ्याम् | स्मृतेभिः | करण |

---

(१) अः = विष्णुः, तस्यापत्यमिति विग्रहे 'अत इञ्' 'यस्येति च' इत्यकारलोपः 'इः' (कामः) इति । ततः इना सह वर्तते इति विग्रहे 'तेन सहेति तुल्ययोगे' इति बहुव्रीहौ 'वोपसर्जनस्य' इति सहस्य सभावे गुणे 'से' इति । अथवा अस्य स्त्री ई ( लक्ष्मी ), तया सह वर्तते इति पूर्वोक्तप्रकारेण 'से' इति । ततः सुः, रुत्वविसर्गौ । (२) ङसि—ङसं वर्जयित्वा अजादौ सर्वत्र अयादेशः । यदि 'से' इत्येकादेशस्य अन्तवद्भावेन पदान्तत्वात् अयादेशं बाधित्वा जश्शसोः परतः 'एङः पदान्तादि'ति पूर्वरूपमेकादेशः स्यादित्युच्यते तदा 'थासः से' 'ईशः से' इति विहितादेशस्यानुकरणम्बोध्यमिति नवीनाः । ( ३–४ ) 'ङसिङसोश्च' । (५) 'एङ्ह्रस्वात् सम्बुद्धेः' । (६) इः ( कामः ) स्मृतो येन सः, अथवा ई (लक्ष्मी) स्मृता येनेति विग्रहे 'अनेकमन्यपदार्थे' इति वहुव्रीहिसमासे सति 'निष्ठा' [illegible] पूर्वनिपाते गुणः, अन्यत् कार्यं 'से' शब्दवत् ज्ञेयम् । (७) [illegible]

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| च० | स्मृतये | स्मृतेभ्याम् | स्मृतेभ्य | सम्प्र० |
| पं० | स्मृतेः | स्मृतेभ्याम् | स्मृतेभ्यः | अपा० |
| ष० | स्मृतेः | स्मृतयोः | स्मृतयाम् | सम्ब० |
| स० | स्मृतयि | स्मृतयोः | स्मृतेषु | अधि० |
| | हे स्मृते | हे स्मृतयौ | हे स्मृतयः | सम्बो० |

[ ६८ ] ओकारान्तः पुँल्लिङ्गः 'गो' शब्दः

( गौ का प्रयोग गाय तथा बैल दोनों में होता है )

| | | | | |
|---|---|---|---|---|
| प्र० | गौः[1] | गावौ | गावः | कर्त्ता |
| द्वि० | गाम्[2] | गावौ | गाः | कर्म |
| तृ० | गवा | गोभ्याम् | गोभिः | करण |
| च० | गवे | गोभ्याम् | गोभ्यः | सम्प्र० |
| पं० | गोः[3] | गोभ्याम् | गोभ्यः | अपा० |
| ष० | गोः | गवोः | गवाम् | सम्ब० |
| स० | गवि | गवोः | गोषु | अधि० |
| | हे गौः | हे गावौ | हे गावः | सम्बो० |

[ ६९ ] ओकारान्तः पुँल्लिङ्गः 'सुद्यो' शब्दः ( स्वर्ग में रहने वाला )

| | | | | |
|---|---|---|---|---|
| प्र० | सुद्यौः[4] | सुद्यावौ | सुद्यावः | कर्त्ता |
| द्वि० | सुद्याम् | सुद्यावौ | सुद्यावः | कर्म |

---

'से' शब्दवत् 'एङः पदान्तादति' इति पूर्वरूपस्य प्राप्तिः कुतो नेति चेत् सत्यम्, 'उत्तरपदत्वे चापदादिविधौ प्रतिषेधः' इति प्रत्ययलक्षणप्रतिषेधात्। (१) गो स् इति स्थिते 'गोतो णित्' इति णित्वे 'अचो ञ्णिति' इति वृद्धिः रुत्वविसर्गौ। (२) 'औतोऽम्शसोः'। (३) 'ङसि ङसोश्च'। (४) सु=शोभना द्यौर्यस्येति विग्रहः। सुद्यो स् इति स्थिते 'गोतो णित्' इत्यस्याऽप्राप्ते 'ओतो णिदिति वाच्यम्' गोत इति गकारमपनीय 'ओतो णित्' इति वाच्यमित्यर्थः तेन सुद्यो शब्दस्याऽपि गोशब्दवद्रूपाणीति भावः।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| तृ० | सुद्यावा | सुद्योभ्याम् | सुद्योभिः | करण |
| च० | सुद्यवे | सुद्योभ्याम् | सुद्योभ्यः | सम्प्र० |
| पं० | सुद्योः | सुद्योभ्याम् | सुद्योभ्यः | अपा० |
| ष० | सुद्योः | सुद्यवोः | सुद्यवाम् | सम्ब० |
| स० | सुद्यवि | सुद्यवोः | सुद्योषु | अधि० |
| | हे सुद्यौः | हे सुद्यावौ | हे सुद्यावः | सम्बो० |

[ ७० ] ओकारान्तः पुँल्लिङ्गः 'स्मृतो' शब्दः
( भगवान् शंकर को स्मरण करने वाला )

| | | | | |
|---|---|---|---|---|
| प्र० | [1]स्मृतौः | स्मृतावौ | स्मृतावः | कर्त्ता |
| द्वि० | स्मृताम् | स्मृतावौ | स्मृतावः | कर्म |
| तृ० | स्मृतावा | स्मृतोभ्याम् | स्मृतोभिः | करण |
| च० | स्मृतवे | स्मृतोभ्याम् | स्मृतोभ्यः | सम्प्र० |
| पं० | स्मृतोः | स्मृतोभ्याम् | स्मृतोभ्यः | अपा० |
| ष० | स्मृतोः | स्मृतवोः | स्मृतवाम् | सम्ब० |
| स० | स्मृतवि | स्मृतवोः | स्मृतेषु | अधि० |
| | हे स्मृतौ | हे स्मृतावौ | हे स्मृतावः | सम्बो० |

[ ७१ ] ऐकारान्तः पुँलिङ्ग 'रै' शब्दः ( धनवाची )

| | | | | |
|---|---|---|---|---|
| प्र० | [2]राः | [3]रायौ | रायः | कर्त्ता |
| द्वि० | रायम् | रायौ | रायः | कर्म |
| तृ० | राया | राभ्याम् | राभिः | करण |

(१) उः = शम्भुः स्मृतो येनेति विग्रहे बहुव्रीहिसमासे सुब्लुकि 'निष्ठा' इत्यनेन स्मृतिशब्दस्य पूर्वनिपाते 'आद्गुणः' इति गुणे 'स्मृतो' शब्दः। गोशब्दवत् साधनप्रकारो बोध्यः। अत्र नवीनाः—'गोतो णित्' इति सूत्रशेषे 'द्योश्च वृद्धिर्वक्तव्या' इत्येव भाष्यवार्तिकदर्शनेन 'ओतो णिदिति वाच्यम्' इति वचनमप्रामाणिकं अतोऽन्यद्दोकारातं प्रातिपदिकमनभिधानमेवेति वदन्ति। (२) 'रायो हलि'। (३) अजादौ आया देशः।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| च० | राये | राभ्याम् | राभ्यः | सम्प्र० |
| पं० | रायः | राभ्याम् | राभ्यः | अपा० |
| ष० | रायः | रायोः | रायाम् | सम्ब० |
| स० | रायि | रायोः | रासु | अधि० |
| | हे राः | हे रायौ | हे रायः | सम्बो० |

[ ७२ ] औकारान्तः पुँल्लिङ्गः 'ग्लौ' शब्दः ( चन्द्रमा )

| | | | | |
|---|---|---|---|---|
| प्र० | ग्लौः[1] | ग्लावौ[2] | ग्लावः | कर्त्ता |
| द्वि० | ग्लावम् | ग्लावौ | ग्लावः | कर्म |
| तृ० | ग्लावा | ग्लौभ्याम् | ग्लौभिः | करण |
| च० | ग्लावे | ग्लौभ्याम् | ग्लौभ्यः | सम्प्र० |
| प० | ग्लावः | ग्लौभ्याम् | ग्लौभ्यः | अपा० |
| ष० | ग्लावः | ग्लावोः | ग्लावाम् | सम्ब० |
| स० | ग्लावि | ग्लावोः | ग्लौषु | अधि० |
| | हे ग्लौः | हे ग्लावौ | हे ग्लावः | सम्बो० |

एवं जनौः[3], जनावौ जनाव, इत्यादि ।

इति अजन्तपुँल्लिङ्गशब्दाः ।

## अथ अजन्तस्त्रीलिङ्गशब्दाः ॥ २ ॥

[ ७३ ] आकारान्त स्त्रीलिङ्गो 'रमा' शब्दः ( लक्ष्मी )

| | | | | |
|---|---|---|---|---|
| प्र० | रमा[4] | रमे[5] | रमाः | कर्त्ता |

---

(१) रुत्वविसर्गौ । (२) अजादौ आवादेशः । (३) जनानवतीति जनौः । जनोपपदात्, अवधातोः क्विप् 'ज्वरत्वरे'ति ऊठ् 'एत्येधत्यूठ्सु' इति वृद्धिः ।

**इति सोत्तराकौमुदीरूपलतायाम् अजन्तपुँल्लिङ्गशब्दाः ।**

(४) रमते इति रमा, पचादित्वात् 'नन्दिग्रही'त्यादिसूत्रेण अचि, स्त्रीत्वाट्टाप्, 'ङ्याप्प्रातिपदिकात्' इत्यत्र ङ्याप्ग्रहणस्य प्रत्याख्यातत्वेन लिङ्गविशिष्टपरिभाषया स्वादयः । हल्ङ्यादिति सुलोपः । (५) 'औङ् आपः' इति शीभावे गुणः ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| द्वि० | रमाम्[1] | रमे | रमाः[2] | कर्म |
| तृ० | रमया[3] | रमाभ्याम् | रमाभिः | करण |
| च० | रमायै[4] | रमाभ्याम् | रमाभ्यः | सम्प्र० |
| पं० | रमायाः[5] | रमाभ्याम् | रमाभ्यः | अपा० |
| ष० | रमायाः | रमयोः[6] | रमाणाम्[7] | सम्ब० |
| स० | रमायाम्[8] | रमयोः | रमासु | अधि० |
| | हे रमे | हे रमे | हे रमाः | सम्बो० |

एवं दुर्गा, अम्बिका, सीता, बाला, पाठशाला, माला, लता, विशेषता, प्रसन्नता, याचना, अध्यापिका, छात्रा, विद्या, आज्ञा, सभा, प्रजा, खट्वा, शर्करा, सेवा, अट्टालिका, यवनिकादय आकारान्ताः

[ ७४ ] आकारान्तः स्त्रीलिङ्गः सर्वनाम 'सर्वा' शब्दः (सब स्त्री)

| | | | | |
|---|---|---|---|---|
| प्र० | सर्वा[9] | सर्वे | सर्वाः | कर्त्ता |
| द्वि० | सर्वाम् | सर्वे | सर्वाः | कर्म |
| तृ० | सर्वया | सर्वाभ्याम् | सर्वाभिः | करण |
| च० | सर्वस्यै[10] | सर्वाभ्याम् | सर्वाभ्यः | सम्प्र० |
| पं० | सर्वस्याः[11] | सर्वाभ्याम् | सर्वाभ्यः | अपा० |
| ष० | सर्वस्याः | सर्वयोः | सर्वासाम्[12] | सम्ब० |

(१) 'अमि पूर्वः' । (२) पूर्वसवर्णदीर्घे स्त्रीत्वान्नत्वाभावः । (३-६)'आङि चापः' इत्येत्वे अयादेशः । (४) 'याडापः' इति याडागमे वृद्धिः । (५) ङसि-ङसोः याडागमे सवर्णदीर्घः, (७) 'ह्रस्वनद्यापः' इति नुटि पर्जन्यवल्लक्षणप्रवृत्त्या'नामी'ति दीर्घे 'अट्कुप्वाङि'ति णत्वम् । (८) 'ङेराम्नद्याम्नीभ्यः' इति आमादेशे याडागमे सवर्णदीर्घः । अत्र प्रयोगे मकारस्येत्संज्ञा तु न भवति 'न विभक्तावि'ति निषेधात् । (९)सर्वशब्दाट्टापि 'सर्वा' शब्दः । सो ऽपि ङे-ङसि-ङस्-ङी-आम्-विभक्तीन् वर्जयित्वा 'रमा' शब्दवत् । (१०) याटं प्रबाध्य 'सर्वनाम्नः स्याड्' इति स्याटि आकारस्य ह्रस्वे वृद्धिः । (११) ङसि-ङसोः स्याटि आपो ह्रस्वे सवर्णदीर्घः । (१२) 'आमि सर्वनाम्नः सुट्' । नचावन्तस्य

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| स० | सर्वस्याम् | सर्वयोः | सर्वासु | अधि० |
| | हे सर्वे | हे सर्वे | हे सर्वाः | सम्बो |

एवं सर्वादिगणपठिताः विश्वादय आबन्ताः शब्दाः तद्यथा-विश्वा, कतरा, कतमा, यतरा, यतमा, ततरा, ततमा, एकतरा, एकतमा, अन्या, अन्यतरा, इतरा, त्वा, नेमा, समा, सिमा, पूर्वा, परा अवरा, दक्षिणा, उत्तरा, अपरा, अधरा, स्वा, अन्तरा, संख्याभिन्नार्थक एका-शब्दश्च ।

[ ७५ ] आकारान्तः स्त्रीलिङ्गो नित्यद्विवचनान्तः 'उभा' शब्दः ।
प्र०-उभे द्वि०-उभे तृ०-उभाभ्याम् च०-उभाभ्याम्
पं०-उभाभ्याम् ष०-उभयोः स०-उभयोः सम्बो० हे उभे

[ ७६ ] ईकारान्तः स्त्रीलिङ्गो द्विवचनरहितः 'उभयी' शब्दः ।

| | | | | |
|---|---|---|---|---|
| प्र० | उभयी[2] | ० | उभय्यः[3] | कर्त्ता |
| द्वि० | उभयीम् | ० | उभयीः | कर्म |
| तृ० | उभय्या | ० | उभयीभिः | करण |
| च० | उभय्यै | ० | उभयीभ्यः | सम्प्र० |
| पं० | उभय्याः | ० | उभयीभ्यः | अपा० |
| ष० | उभय्याः | ० | उभयीनाम् | सम्ब० |
| स० | उभय्याम् | ० | उभयीषु | अधि० |
| | हे उभयि | ० | हे उभय्यः | सम्बो० |

---

सर्वाशब्दस्य सर्वादिगणे पाठाभावात् कथं सर्वनामत्वमिति वाच्यम् , वकारादकारस्य आपश्च यो दीर्घैकादेशः तस्य पूर्वान्तत्वेन ग्रहणादिति तत्त्वम् । (१) रमाशब्दवत् 'उभा' शब्देऽपि साधनप्रकारो ज्ञेयः । (२) उभयशब्दस्य तयप्-प्रत्ययान्ततया 'टिड्ढाणञ्' इति ङीप् , ङ्यन्तत्वात् सुलोपः । (३) 'नादिचि' इति दीर्घनिषेधात् यणि । गौरीशब्दवत् 'उभयी' शब्देऽपि सर्वं कार्यं ज्ञेयम् ।

[ ७७ ] आकारान्तः स्त्रीलिङ्गो नित्यद्विवचनान्तो 'द्वा' शब्दः।

प्र०-द्वे[1] द्वि०-द्वे तृ०-द्वाभ्याम् च०-द्वाभ्याम् पं०-द्वाभ्याम् ष-द्वयोः स०-द्वयोः ( त्यदादेः सम्बोधनं नास्ति )

[ ७८ ] आकारान्तः स्त्रीलिङ्गः 'उत्तरपूर्वा' शब्दः ( ईशान कोण )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | उत्तरपूर्वा[2] | उत्तरपूर्वे | उत्तरपूर्वाः | कर्त्ता |
| द्वि० | उत्तरपूर्वाम् | उत्तरपूर्वे | उत्तरपूर्वाः | कर्म |
| तृ० | उत्तरपूर्वया | उत्तरपूर्वाभ्याम् | उत्तरपूर्वाभिः | करण |
| च० | उत्तरपूर्वस्यै[3] / उत्तरपूर्वायै | उत्तरपूर्वाभ्याम् | उत्तरपूर्वाभ्यः | सम्प्र० |
| पं० | उत्तरपूर्वस्याः / उत्तरपूर्वायाः | उत्तरपूर्वाभ्याम् | उत्तरपूर्वाभ्यः | अपा० |
| ष० | उत्तरपूर्वस्याः / उत्तरपूर्वायाः | उत्तरपूर्वयोः | उत्तरपूर्वासाम् / उत्तरपूर्वाणाम् | सम्ब० |
| स० | उत्तरपूर्वस्याम् / उत्तरपूर्वायाम् | उत्तरपूर्वयोः | उत्तरपूर्वासु | अधि० |
| | हे उत्तरपूर्वे | हे उत्तरपूर्वे | हे उत्तरपूर्वाः | सम्बो० |

[ ७९ ] आकारान्तः स्त्रीलिङ्गो 'द्वितीया' शब्दः ( दूसरी )

| | | | | |
|---|---|---|---|---|
| प्र० | द्वितीया | द्वितीये | द्वितीयाः | कर्त्ता |
| द्वि० | द्वितीयाम् | द्वितीये | द्वितीयाः | कर्म |
| तृ० | द्वितीयया | द्वितीयाभ्याम् | द्वितीयाभिः | करण |

---

(१) अत्वे सति टापि, रमाशब्दवत् कार्यं बोध्यम्। (२) उत्तरस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालम्, उत्तरपूर्वा। (३) 'विभाषा दिक्समासे बहुव्रीहौ' इति सर्वनामत्वपक्षे सर्वाशब्दवत् अन्यत्र रमाशब्दवत् कार्यं ज्ञेयम्। 'विभाषे'ति सूत्रे लक्षणप्रतिपदोक्तपरिभाषया 'दिङ्नामान्यन्तराले' इति विहितस्य प्रतिपदोक्तस्य दिक्समासस्यैव ग्रहणं तेन या उत्तरा सा पूर्वा यस्या उन्मुखायाः इति विग्रहे सर्वनामसंज्ञाभावात् रमाशब्दवत् रूपं बोध्यम्।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| च० | द्वितीयस्यै[1] / द्वितीयायै | द्वितीयाभ्याम् | द्वितीयाभ्यः | सम्प्र० |
| पं० | द्वितीयस्याः / द्वितीयायाः | द्वितीयाभ्याम् | द्वितीयाभ्यः | अपा० |
| ष० | द्वितीयस्याः / द्वितीयायाः | द्वितीययोः | द्वितीयानाम् | सम्ब० |
| स० | द्वितीयस्याम् / द्वितीयायाम् | द्वितीययोः | द्वितीयासु | अधि० |
| | हे द्वितीये | हे द्वितीये | हे द्वितीयाः | सम्बो० |

[ ८० ] आकारान्तः स्त्रीलिङ्गः, 'तृतीया' शब्दः ( तीसरी )

| | | | | |
|---|---|---|---|---|
| प्र० | तृतीया | तृतीये | तृतीयाः | कर्त्ता |
| द्वि० | तृतीयाम् | तृतीये | तृतीयाः | कर्म |
| तृ० | तृतीयया | तृतीयाभ्याम् | तृतीयाभिः | करण |
| च० | तृतीयस्यै[2] / तृतीयायै | तृतीयाभ्याम् | तृतीयाभ्यः | सम्प्र० |
| पं० | तृतीयस्याः / तृतीयायाः | तृतीयाभ्याम् | तृतीयाभ्यः | अपा० |
| ष० | तृतीयस्याः / तृतीयायाः | तृतीययोः | तृतीयानाम् | सम्ब० |
| स० | तृतीयस्याम् / तृतीयायाम् | तृतीययोः | तृतीयासु | अधि० |
| | हे तृतीये | हे तृतीये | हे तृतीयाः | सम्बो० |

[ ८१ ] आकारान्तः स्त्रीलिङ्गः 'अम्बा' शब्दः ( माता )

| | | | | |
|---|---|---|---|---|
| प्र० | अम्बा | अम्बे | अम्बाः | कर्त्ता |
| द्वि० | अम्बाम् | अम्बे | अम्बाः | कर्म |
| तृ० | अम्बया | अम्बाभ्याम् | अम्बाभिः | करण |

(१-२) 'विभाषा द्वितीया तृतीयाभ्याम्' ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| च० | अम्बायै | अम्बाभ्याम् | अम्बाभ्यः | सम्प्र० |
| पं० | अम्बायाः | अम्बाभ्याम् | अम्बाभ्यः | अपा० |
| ष० | अम्बायाः | अम्बयोः | अम्बानाम् | सम्ब० |
| स० | अम्बायाम् | अम्बयोः | अम्बासु | अधि० |
| | [1] हे अम्ब | हे अम्बे | हे अम्बाः | सम्बो० |

एवम् अक्का-अल्लाशब्दयोऽम्बार्थकाः ।

[ ८२ ] आकारान्त स्त्रीलिङ्गो 'जरा' शब्दः ( वृद्धावस्था )

| | | | | |
|---|---|---|---|---|
| प्र० | [2] जरा | जरसौ / जरे | जरसः / जराः | कर्त्ता |
| द्वि० | जरसम् / जराम् | जरसौ / जरे | जरसः / जराः | कर्म |
| तृ० | जरसा / जरया | जराभ्याम् | जराभिः | करण |
| च० | जरसे / जरायै | जराभ्याम | जराभ्यः | सम्प्र० |
| पं० | जरसः / जरायाः | जराभ्याम् | जराभ्यः | अपा० |
| ष० | जरसः / जरायाः | जरसोः / जरयोः | जरसाम / जराणाम् | सम्ब० |
| स० | [3] जरसि / जारायाम् | जरसोः / जरयोः | जरासु | अधि० |

(१) 'अम्बार्थनद्योर्ह्रस्वः' । ( शेषं 'रमा'वत् ) । (२) 'जॄष वयोहानौ' इत्यस्मात् 'षिद्भिदादिभ्यः' इत्यङि, 'ऋदृशोऽङि' गुणः, रपरत्वम् , अदन्तत्वा-द्दाप् सुलोपः । (३) जरायाः जरसन्यतरस्याम्'शोभावात् परत्वात् जरस् । स्या-देशाद्युत्तरं जरसादेशस्तु न सन्निपातपरिभाषाविरोधात् । जरसादेशाभावपक्षे हलादौ च 'रमा' वत् । (४) जरसि इत्यत्र तु नित्यत्वात् आमम्, अन्तरङ्गत्वात् याटं बाधित्वा जरसादेशः । नच जरसादेशे कृते स्थानिवद्भावेन आबन्तत्वमाश्रित्य आब-न्तत्वनिमित्तकाः तत्तदादेशादयः कुतो नेति वाच्यम् अत्र सर्वत्र सूत्रे आ-आबिति

| एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|
| हे जरे | हे जरसौ / हे जरे | हे जरस / हे जराः | सम्बो० |

[ ८३ ] आकारान्त स्त्रीलिङ्गो 'नासिका' शब्दः

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | नासिका | नासिके | नासिकाः | कर्त्ता |
| द्वि० | नासिकाम् | नासिके | नसः[1] / नासिकाः | कर्म |
| तृ० | नसा / नासिकया | नोभ्याम्[2] / नासिकाभ्याम् | नोभिः / नासिकाभिः | करण |
| च० | नसे / नासिकायै | नोभ्याम् / नासिकाभ्याम् | नोभ्यः / नासिकाभ्यः | सम्प्र० |
| पं० | नसः / नासिकायाः | नोभ्याम् / नासिकाभ्याम् | नोभ्यः / नासिकाभ्यः | अपा० |
| ष० | नसः / नासिकायाः | नसोः / नासिकयोः | नसाम् / नासिकानाम् | सम्ब० |
| स० | नसि / नासिकायाम् | नसोः / नासिकयोः | नस्सु / नासिकासु | अधि० |
| | हे नासिके | हे नासिके | हे नासिकाः | सम्बो० |

[ ८४ ] आकारान्तः स्त्रीलिङ्गो 'निशा' शब्दः ( रात्रि )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | निशा | निशे | निशाः | कर्त्ता |
| द्वि० | निशाम् | निशे | निशः[3]–निशाः | कर्म |
| तृ० | निशा / निशया | निड्भ्याम्[4] / निशाभ्याम् | निड्भिः / निशाभिः | करण |

---

प्रश्लिष्य आकाररूपस्यैवापः सर्वत्र ग्रहणेन 'अनल्विधाविति निषेधात्। एवं नशाद्यादेशभावपक्षेपि बोध्यम्। (१) 'पद्दन्नि'ति नासिकायाः नस्। (२) 'स्वादिष्वि'ति पदत्वात् रुत्वादिकम्। नसादेशाभावपक्षे 'रमा'वत् (३) 'पद्दन्नोमास' इत्यादि सूत्रेण शसादिविभक्तौ परतः निशाया नश्। (४) 'स्वादिष्वि'ति पदत्वात् 'व्रश्च-भ्रस्ज-सृज-मृज-यज-राज-भ्राजच्छ शांषः' इति सूत्रेण शस्य षत्वे जश्त्वम्।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| च० | निशे | निड्भ्याम् | निड्भ्यः | सम्प्र० |
| | निशायै | निशाभ्याम् | निशाभ्यः | |
| पं० | निशः | निड्भ्याम् | निड्भ्यः | अपा० |
| | निशायाः | निशाभ्याम् | निशाभ्यः | |
| ष० | निशः | निशोः | निशाम् | सम्ब० |
| | निशायाः | निशयोः | निशानाम् | |
| स० | निशि | निशोः | निट्त्सु[1]-निट्सु | अधि० |
| | निशायाम् | निशयोः | निशासु | |
| | हे निशे | हे निशे | हे निशाः | सम्बो० |

[ ८५ ] आकारान्तः स्त्रीलिङ्गः 'पृतना' शब्दः ( सेना, पल्टन )

| | | | | |
|---|---|---|---|---|
| प्र० | पृतना | पृतने | पृतनाः | कर्ता |
| द्वि० | पृतनाम् | पृतने | पृतः[2]-पृतनाः | कर्म |
| तृ० | पृता | पृद्भ्याम् | पृद्भिः | करण |
| | पृतनया | पृतनाभ्याम् | पृतनाभिः | |
| च० | पृते | पृद्भ्याम् | पृद्भ्यः | सम्प्र० |
| | पृतनायै | पृतनाभ्याम् | पृतनाभ्यः | |
| पं० | पृतः | पृद्भ्याम् | पृद्भ्यः | अपा० |
| | पृतनायाः | पृतनाभ्याम् | पृतनाभ्यः | |
| ष० | पृतः | पृतोः | पृताम् | सम्ब० |
| | पृतनायाः | पृतनयोः | पृतनानाम् | |
| स० | पृति | पृतोः | पृत्सु | अधि० |
| | पृतनायाम् | पृतनयोः | पृतनासु | |
| | हे पृतने | हे पृतने | हे पृतनाः | सम्बो० |

---

(१) 'व्रश्चे'ति षत्वे तस्य जश्त्वेन डकारे 'डसि धुट्' इति धुटि चर्त्वम् । धुडभावपक्षे निट्सु । अत्रोभयत्र 'चयोद्वितीया' इति धुट्पक्षे तस्य थः तदभावपक्षे टस्य ठो न भवति चर्त्वस्यासिद्धत्वात् । एवं 'निट्त्सु' इत्यत्र तकारस्य ष्टुत्वशंकालेशोऽपि न, 'स्वादिष्वि'ति पदत्वेन 'न पदान्ताट्टोः' इति निषेधात् ।
(२) 'मांसपृतनासानूनामि'ति पृतादेशः ।

### [ ८६ ] आकारान्तः स्त्रीलिङ्गो 'गोपा' शब्दः ( ग्वालिन )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | गोपाः[1] | गोपौ | गोपाः | कर्त्ता |
| द्वि० | गोपाम् | गोपौ | गोपः | कर्म |
| तृ० | गोपा[2] | गोपाभ्याम् | गोपाभिः | करण |
| च० | गोपे | गोपाभ्याम् | गोपाभ्यः | सम्प्र० |
| पं० | गोपः | गोपाभ्याम् | गोपाभ्यः | अपा० |
| ष० | गोपः | गोपोः | गोपाम् | सम्ब० |
| स० | गोपि | गोपोः | गोपासु | अधि० |
| | हे गोपाः | हे गोपौ | हे गोपाः | सम्बो० |

एवं धेनुपा-धनपा-लोकपा-इत्यादयः ।

### [ ८७ ] इकारान्तः स्त्रीलिङ्गो 'मति' शब्दः ( बुद्धि )

| | | | | |
|---|---|---|---|---|
| प्र० | मतिः | मती | मतयः | कर्त्ता |
| द्वि० | मतिम् | मती | मतीः | कर्म |
| तृ० | मत्या[3] | मतिभ्याम् | मतिभिः | करण |
| च० | मत्यै[4] / मतये | मतिभ्याम् | मतिभ्यः | सम्प्र० |
| पं० | मत्याः / मतेः | मतिभ्याम् | मतिभ्यः | अपा० |
| ष० | मत्याः / मतेः | मत्योः | मतीनाम् | सम्ब० |
| स० | मत्याम् / मतौ | मत्योः | मतिषु | अधि० |
| | हे मते | हे मती | हे मतयः | सम्बो० |

एवं श्रुति-स्मृति-स्तुति-नीति-समिति-क्षति-सन्तति-कीर्त्ति-सम्पत्ति-गति-नति-वृत्ति-विपत्ति-बुद्धि-मुष्टि-कृषि-प्रभृतयः

---

(१) गां पाति या सा गोपा, विच । आबन्तत्वाभावान्न सुलोपः । (२) दीर्घः । आबन्तत्वाभावात् 'आङि चापः' इति न । एवञ्च विश्वपा' वत् सर्वकार्यं बोध्यम् । (३) धित्वेऽपि स्त्रीत्वाग्नत्वाऽभावः । (४) 'ङिति ह्रस्वश्च' ।

( ८८ ) इकारान्तः स्त्रीलिङ्गो 'रुचि' शब्दः ( इच्छा, कान्ति )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | रुचिः[1] | रुची | रुचयः | कर्ता |
| द्वि० | रुचिम् | रुची | रुचीः | कर्म |
| तृ० | रुच्या | रुचिभ्याम् | रुचिभिः | करण |
| च० | रुच्यै / रुचये | रुचिभ्याम् | रुचिभ्यः | सम्प्र० |
| पं० | रुच्याः / रुचेः | रुचिभ्याम् | रुचिभ्यः | अपा० |
| ष० | रुच्याः / रुचेः | रुच्योः | रुचीनाम् | सम्ब० |
| स० | रुच्याम् / रुचौ | रुच्योः | रुचिषु | अधि० |
| | हे रुचे | हे रुची | हे रुचयः | सम्बो० |

[ ८९ ] इकारान्तः स्त्रीलिङ्गः 'त्रि' शब्दो नित्यं बहुवचनान्तः ।

प्र०—तिस्रः[2] द्वि०—तिस्रः तृ०—तिसृभिः च०—तिसृभ्यः
पं०—तिसृभ्यः ष०—तिसृणाम्[3] स०—तिसृषु सम्बो०—हे तिस्रः

[ ९० ] रेफान्तः स्त्रीलिङ्गः 'चतुर्' शब्दो नित्यं बहुवचनान्तः ।

प्र०—चतस्रः[4] द्वि०—चतस्रः तृ०—चतसृभिः च०—चतसृभ्यः
पं०—चतसृभ्यः ष०—चतसृणाम् स०—चतसृषु सम्बो०—हे चतस्रः

[९१] प्रियास्तिस्रः प्रियाणि त्रीणि वा यस्याः इति विग्रहे

---

'आण्नद्याः' । 'आटश्च' । नदीत्वाऽभावपक्षे 'हरि'वत् घिसंज्ञादिकार्यं बोध्यम् । ङौ तु नदीत्वपक्षे 'इदुद्भ्याम्'। (१) 'मति'वत् साधनप्रकारो बोध्यः । (२) 'त्रिचतुरोः स्त्रियां तिसृचतसृ' । 'अचि र ऋतः' । जसि—'ऋतो ङि'ति गुणस्य, शसि—'प्रथमयोः' इति दीर्घस्य 'प्रियतिसः' इति वक्ष्यमाणप्रयोगे 'ऋत उत्' इति उत्वस्य च रत्वमपवाद इति बोध्यम् । (३) 'नुमचिरे'ति नुट् । 'न तिसृचतसृ' इति दीर्घनिषेधः । 'ऋवर्णान्नस्ये'ति णत्वम् । (४) 'त्रि' शब्दवत् साधनप्रकारो बोध्यः ।

## स्त्रीलिङ्गः 'प्रियत्रि' शब्दः ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | प्रियत्रिः[1] | प्रियत्री | प्रियत्रयः | कर्त्ता |
| द्वि० | प्रियत्रिम् | प्रियत्री | प्रियत्रीः | कर्म |
| तृ० | प्रियत्र्या | प्रियत्रिभ्याम् | प्रियत्रिभिः | करण |
| च० | प्रियत्र्यै / प्रियत्रये | प्रियत्रिभ्याम् | प्रियत्रिभ्यः | सम्प्र० |
| पं० | प्रियत्र्याः / प्रियत्रेः | प्रियत्रिभ्याम् | प्रियत्रिभ्यः | अपा० |
| ष० | प्रियत्र्याः / प्रियत्रेः | प्रियत्र्योः | प्रियत्रयाणाम्[2] | सम्ब० |
| स० | प्रियत्र्याम् / प्रियत्रौ | प्रियत्र्योः | प्रियत्रिषु | अधि० |
| | हे प्रियत्रे | हे प्रियत्री | हे प्रियत्रयः | सम्बो० |

[९२] प्रियास्तिस्रो यस्य सः इति विग्रहे तु पुँल्लिङ्गः 'प्रियत्रि' शब्दः।

| | | | | |
|---|---|---|---|---|
| प्र० | प्रियतिसा[3] | प्रियतिस्रौ[4] | प्रियतिस्रः | कर्त्ता |
| द्वि० | प्रियतिस्रम् | प्रियतिस्रौ | प्रियतिस्रः | कर्म |
| तृ० | प्रियतिस्रा | प्रियतिसृभ्याम् | प्रियतिसृभिः | करण |
| च० | प्रियतिस्रे | प्रियतिसृभ्याम् | प्रियतिसृभ्यः | सम्प्र० |
| पं० | प्रियतिस्रः | प्रियतिसृभ्याम् | प्रियतिसृभ्यः | अपा० |
| ष० | प्रियतिस्रः | प्रियतिस्रोः | प्रियतिसृणाम्[5] | सम्ब० |

(१) 'तृचतुरोः' इति सूत्रे श्रुतत्वात् स्त्रियामिति त्रिचतुरोर्विशेषणं नतु तदन्तयोर्मानाभावात् । अत्र तु 'प्रियत्रि' शब्दो हि स्त्रीलिङ्गो न तु 'त्रि'शब्दः तस्मान्न ति-स्रादेशः। एवञ्चामम्वर्जयित्वा मतिशब्दवत् सर्वत्र कार्यं ज्ञेयम् । (२) त्रिशब्दान्तत्वेऽपि पदाङ्गाधिकारेति परिभाषया 'त्रेस्त्रयः' इति त्रयादेशे नुटि दीर्घे णत्वम् । (३) 'स्त्रियाः पुंवदि'ति 'प्रियत्रि' शब्दस्य पुंवत्वेऽपि 'त्रि'शब्दस्य स्त्रीलिङ्गत्वात्' तिस्रादेशः । 'ऋदुशनसि'त्यनङि दीर्घः नलोपः । (४) गुणं बाधित्वा 'अचि र ऋतः' इति रत्वम् । एवं सर्वत्र रत्वं बाधते इति बोध्यम् । (५) त्रया'देशं बाधित्वा परत्वात्तिस्रादेशे सति रत्वं बाधित्वा'नुमचिरे'ति नुट् 'ऋवर्णान्नस्ये'ति णत्वम् । 'न तिसृचतसृ' इति निषेधात् दीर्घो न ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| स० | प्रियतिस्त्रि | प्रियतिस्रोः | प्रियतिस्रिषु | अधि० |
| | हे प्रियतिस्ना | हे प्रियतिस्रौ | हे प्रियतिस्रः | सम्बो० |

[ ९२ ] प्रियास्तिस्रो यस्य तदिति विग्रहे तु नपुंसकः 'प्रियत्रि' शब्दः ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | प्रियत्रि[1] / प्रियतिसृ | प्रियतिसृणी[2] | प्रियतिसृणि | कर्त्ता |
| द्वि० | प्रियत्रि / प्रियतिसृ | प्रियतिसृणी | प्रियतिसृणि | कर्म |
| तृ० | प्रियतिस्रा[3] / प्रियतिसृणा | प्रियतिसृभ्याम् | प्रियतिसृभिः | करण |
| च० | प्रियतिस्रे / प्रियतिसृणे | प्रियतिसृभ्याम् | प्रियतिसृभ्यः | सम्प्र० |
| प० | प्रियतिस्रः / प्रियतिसृणः | प्रियतिसृभ्याम् | प्रियतिसृभ्यः | अपा० |
| ष० | प्रियतिस्रः / प्रियतिसृणः | प्रियतिस्रोः / प्रियतिसृणोः | प्रियतिसृणाम्[4] | सम्ब० |
| स० | प्रियतिस्रि / प्रियतिसृणि | प्रियतिस्रोः / प्रियतिसृणोः | प्रियतिसृषु | अधि० |
| | हे प्रियत्रि / हे प्रियतिसृ | हे प्रियतिसृणी | हे प्रियतिसृणि | सम्बो० |

(१) 'नलुमते'ति प्रत्ययलक्षणनिषेधात् तिस्रादेशो न, तस्याऽनित्यत्वे तु पक्षे तिस्रादेशो भवत्येवेति । (२) 'अचि र ऋतः' इति रत्वं बाधित्वा 'इकोऽचि विभक्तौ' इति नुम् । (३) अजादितृतीयादिविभक्तौ तु 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति पाक्षिकपुंवत्वे नुमभावात् 'अचि रे'ति रत्वम् । पुंवत्वाभावपक्षे तु प्रायेण अजादौ सर्वत्र नुमि णत्वम्बोध्यम् । (४) रत्वं, नुमञ्च बाधित्वा 'नुमचिरे'ति नुटि 'ऋवर्णान्नस्ये'ति णत्वम् । ( त्रिशब्दस्य बहुव्रीहि समासे कृते अन्यपदार्थप्रधानत्वात् एक–द्वि–बहुवचनानि भवन्तीति । इत्थञ्च १४ पृष्ठे 'प्रियत्रि' शब्देऽपि बोध्यम् , तत्र टिप्पण्यां "त्रिशब्दत्वाभावात्" इति प्रमादतः लिखितं तत्र स्थाने "आमं वर्जयित्वा" इति बोध्यम् )

[ ९४ ] आकारान्तः स्त्रीलिङ्गो नित्यं द्विवचनान्तो 'द्वा' शब्दः।
प्र०-द्वे[1] द्वि०-द्वे- तृ०-द्वाभ्याम् च०-द्वाभ्याम्
पं०-द्वाभ्याम् ष०-द्वयोः स०-द्वयोः

[ ९५ ] ईकारान्तः स्त्रीलिङ्गो 'गौरी' शब्दः (पार्वती)

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | गौरी[2] | गौर्यौ[3] | गौर्यः[4] | कर्त्ता |
| द्वि० | गौरीम् | गौर्यौ | गौरीः | कर्म |
| तृ० | गौर्या | गौरीभ्याम् | गौरीभिः | करण |
| च० | गौर्यै[6] | गौरीभ्याम् | गौरीभ्यः | सम्प्र० |
| पं० | गौर्याः | गौरीभ्याम् | गौरीभ्यः | अपा० |
| ष० | गौर्याः | गौर्योः | गौरीणाम् | सम्ब० |
| स० | गौर्याम् | गौर्योः | गौरीषु | अधि० |
| | हे गौरि | हे गौर्यौ | हे गौर्यः | सम्बो० |

[ ९६ ] ईकारान्तः स्त्रीलिङ्गो 'वाणी' शब्दः (सरस्वती)

| | | | | |
|---|---|---|---|---|
| प्र० | वाँणी[7] | वाण्यौ | वाण्यः | कर्त्ता |
| द्वि० | वाणीम् | वाण्यौ | वाणीः | कर्म |
| तृ० | वाण्या | वाणीभ्याम् | वाणीभिः | करण |
| च० | वाण्यै | वाणीभ्याम् | वाणीभ्यः | सम्प्र० |

(१) टापि सति रमाशब्दवत् द्वाशब्देऽपि कार्यं ज्ञेयम्। (२) गौरशब्दात् 'षिद्गौरादिभ्यश्च' इति ङीषि 'यस्येति च' इत्यकारलोपे गौरीशब्दः। ततः सौ हल्ङ्यादिना सुलोपः। (३-४) दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधे यण्। (५) 'अमिपूर्वः'। (६) 'यूस्त्र्याख्यौ नदी' इति नदीत्वे बहुश्रेसी' वत् गौरी शब्देऽपि तत्र तत्र नदीकार्यं भवति, नदीसंज्ञककार्यं यथा-'आण्नद्याः' 'ह्रस्व-नद्यापो नुट्' 'ङेराम्नद्याम्नीभ्यः' अम्बार्थनद्योर्ह्रस्वः' इति। (७) 'वण् शब्दे वण्यते=शब्द्यते, इति वाणी। 'इञ्वपादिभ्यः' इति इञ् 'कृदिकारादक्तिनः' इति' ङीप्। अन्यत् कार्यं गौरीशब्दवत् ज्ञेयम्।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| पं० | वाण्याः | वाणीभ्याम् | वाणीभ्यः | अपा० |
| ष० | वाण्याः | वाण्योः | वाणीनाम् | सम्ब० |
| स० | वाण्याम् | वाण्योः | वाणीषु | अधि० |
| | हे वाणि | हे वाण्यौ | हे वाण्यः | सम्बो० |

[ ९७ ] ईकारान्तः स्त्रीलिङ्गो 'नदी' शब्दः ( नदी, सरित् )

| | | | | |
|---|---|---|---|---|
| प्र० | नदी[1] | नद्यौ | नद्यः | कर्त्ता |
| द्वि० | नदीम् | नद्यौ | नदीः | कर्म |
| तृ० | नद्या | नदीभ्याम् | नदीभिः | करण |
| च० | नद्यै | नदीभ्याम् | नदीभ्यः | सम्प्र० |
| पं० | नद्याः | नदीभ्याम् | नदीभ्यः | अपा० |
| ष० | नद्याः | नद्योः | नदीनाम् | सम्ब० |
| स० | नद्याम् | नद्योः | नदीषु | अधि० |
| | हे नदि | हे नद्यौ | हे नद्यः | सम्बो० |

एवं कर्त्री, दण्डिनी, कुमारी, सुन्दरी, रमणी, बुद्धिमती, कामिनी, श्रेयसी, मैत्री, पुत्री, नारी, प्रभृतयः।

[ ९८ ] ईकारान्तः स्त्रीलिङ्गः 'सखी' शब्दः ( सखी, सहेली )

| | | | | |
|---|---|---|---|---|
| प्र० | सखी[2] | सख्यौ | सख्यः | कर्त्ता |
| द्वि० | सखीम् | सख्यौ | सखीः | कर्म |
| तृ० | सख्या | सखीभ्याम् | सखीभिः | करण |
| च० | सख्यै | सखीभ्याम् | सखीभ्यः | सम्प्र० |
| पं० | सख्याः | सखीभ्याम् | सखीभ्यः | अपा० |

(१) 'नदट्' इति पचादौ पाठात् टित्वान्ङीप्। 'गौरी' शब्दवत् साधनप्रकारो बोध्यः। (२) 'सख्यशिश्वीति भाषायाम्' इति ङीष्, अत्र 'लिङ्गविशिष्ट'परिभाषया अनङादयस्तु न "विभक्तौ लिङ्गविशिष्टाऽग्रहणम्' ( विभक्तिनिमित्तके कार्ये कर्तव्ये प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य ग्रहणं नास्तीत्यर्थः ) इति भाष्योक्तपरिभाषया निषेधात्तेन गौरीवत् कार्यं ज्ञेयम्।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| ष० | सख्याः | सख्योः | सखीनाम् | सम्ब० |
| स० | सख्याम् | सख्योः | सखीषु | अधि० |
| | हे सखि | हे सख्यौ | हे सख्यः | सम्बो० |

[ ९९ ] ईकारान्तः स्त्रीलिङ्गो 'लक्ष्मी'[1] शब्दः ( माँ लक्ष्मी )

| | | | | |
|---|---|---|---|---|
| प्र० | लक्ष्मीः | लक्ष्म्यौ | लक्ष्म्यः | कर्त्ता |
| द्वि० | लक्ष्मीम् | लक्ष्म्यौ | लक्ष्मीः | कर्म |
| तृ० | लक्ष्म्या | लक्ष्मीभ्याम् | लक्ष्मीभिः | करण |
| च० | लक्ष्म्यै | लक्ष्मीभ्याम् | लक्ष्मीभ्यः | सम्प्र० |
| पं० | लक्ष्म्याः | लक्ष्मीभ्याम् | लक्ष्मीभ्यः | अपा० |
| ष० | लक्ष्म्याः | लक्ष्म्योः | लक्ष्मीणाम् | सम्ब० |
| स० | लक्ष्म्याम् | लक्ष्म्योः | लक्ष्मीषु | अधि० |
| | हे लक्ष्मि | हे लक्ष्म्यौ | हे लक्ष्म्यः | सम्बो० |

एवम्-अवी[2]-तरी-तन्त्री-प्रभृतयः।

[ १०० ] ईकारान्तः स्त्रीलिङ्गः 'स्त्री'शब्दः [ औरत ]

| | | | | |
|---|---|---|---|---|
| प्र० | स्त्री[3] | स्त्रियौ[4] | स्त्रियः | कर्त्ता |
| द्वि० | स्त्रियम्[5]-स्त्रीम् | स्त्रियौ | स्त्रियः-स्त्रीः | कर्म |
| तृ० | स्त्रिया | स्त्रीभ्याम् | स्त्रीभिः | करण |

(१) लक्षधातोः 'लक्षेर्मुट च' इति ईप्रत्यये मुडागमे च 'लक्ष्मी' शब्दः। अङ्यन्तत्वान्न सुलोपः। 'कृदिकारादि'ति ङीषि तु सुलोपो भवत्येवेति सिद्धान्तः। अत एव लक्ष्मीर्लक्ष्मी हरिप्रियेति द्विरूपकोशस्सङ्गच्छते। शेषं गौरीवत्।

(२) अवी-तन्त्री-तरी-लक्ष्मी-धी-ह्री-श्रीणामुणादिषु।
सप्तस्त्रीलिङ्गशब्दानां न सुलोपो कदा चनः॥ १॥

(३) स्त्यायतोऽस्यां शुक्रशोणिते इति स्त्री', स्त्यायतेर्ड्रट 'लोपोव्योरि'ति य-लोपः, टित्वान्ङीप्। ङ्यन्तत्वात्सुलोपः। (४) स्त्रियाः। (५) 'वाऽम्शसोः।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| च० | स्त्रियै[1] | स्त्रीभ्याम् | स्त्रीभ्यः | सम्प्र० |
| पं० | स्त्रियाः | स्त्रीभ्याम् | स्त्रीभ्यः | अपा० |
| ष० | स्त्रियाः | स्त्रियोः | स्त्रीणाम्[2] | सम्ब० |
| स० | स्त्रियाम्[3] | स्त्रियोः | स्त्रीषु | अधि० |
| | हे स्त्रि | हे स्त्रियौ | हे स्त्रियः | सम्बो० |

[१०१] ह्रस्वान्तः पुंलिङ्गः 'अतिस्त्रि' शब्दः

( स्त्रीको जीतनेवाला जितेन्द्रिय )

| | | | | |
|---|---|---|---|---|
| प्र० | अतिस्त्रिः[4] | अतिस्त्रियौ[5] | अतिस्त्रयः[6] | कर्त्ता |
| द्वि० | अतिस्त्रियम्[7] / अतिस्त्रिम् | अतिस्त्रियौ | अतिस्त्रियः / अतिस्त्रीन् | कर्म |
| तृ० | अतिस्त्रिणा[8] | अतिस्त्रिभ्याम् | अतिस्त्रिभिः | करण |
| च० | अतिस्त्रये | अतिस्त्रिभ्याम् | अतिस्त्रिभ्यः | सम्प्र० |
| पं० | अतिस्त्रेः | अतिस्त्रिभ्याम् | अतिस्त्रिभ्यः | अपा० |
| ष० | अतिस्त्रेः | अतिस्त्रियोः | अतिस्त्रीणाम् | सम्ब० |
| स० | अतिस्त्रौ | अतिस्त्रियोः | अतिस्त्रिषु | अधि० |
| | हे अतिस्त्रे[9] | हे अतिस्त्रियौ | हे अतिस्त्रयः | सम्बो० |

---

(१) 'यूस्त्र्याख्यौ नदी । आण्नद्याः' । 'आटश्च' । 'स्त्रियाः' । (२) इयङं बाधित्वा परत्वान्नुट् । (३) ङेराम्, इयङ् । (४) प्रसङ्गात् पुंसि विशेषं दर्शयति । स्त्रियमतिक्रान्तः यः इति विग्रहे 'अत्यादयः' इति समासः । गोस्त्रियोरिति ह्रस्वः । दीर्घरूपङ्यन्तत्वाभावान्न सुलोपः । (५) एकदेशविकृतन्यायेन (स्थानिवद्भावेन) 'स्त्रियाः' इत्ययङ् । (६) 'जसि च' । जस्, टा, ङसि, ङस्, आम्, ङीत्येतेषु 'अतिस्त्रि' शब्दस्य इयङ् नेत्येतत् श्लोकेन सङ्गृह्णाति—

गुणनाभावौत्वनुड्भिः परत्वात् पुंसि बाध्यते ।
क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम् ॥

पुंसि गुण–नाभाव–औत्व–नुड्भिः, क्लीबे नुमा च परत्वात् स्त्रीशब्दस्य इयङ् बाध्यते 'इत्यवधार्यतामित्यन्वयः । (७) वाऽम्शसोः । (८) परत्वात् घिसंज्ञाप्रयुक्तकार्यं हरिवत् भवति । (९) 'ह्रस्वस्य गुणः' ।

## [ १०२ ] ह्रस्वान्तो नपुंसकलिङ्गः 'अतिस्त्रि' शब्दः
( स्त्रीको जीतने वाला–जितेन्द्रिय, कुल )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | अतिस्त्रि[1] | अतिस्त्रिणी[2] | अतिस्त्रीणि[3] | कर्त्ता |
| द्वि० | अतिस्त्रि | अतिस्त्रिणी | अतिस्त्रीणि | कर्म |
| तृ० | अतिस्त्रिणा[4] | अतिस्त्रिभ्याम् | अतिस्त्रिभिः | करण |
| च० | अतिस्त्र्यै[5] / अतिस्त्रिणे | अतिस्त्रिभ्याम् | अतिस्त्रिभ्यः | सम्प्र० |
| पं० | अतिस्त्रेः / अतिस्त्रिणः | अतिस्त्रिभ्याम् | अतिस्त्रिभ्यः | अपा० |
| ष० | अतिस्त्रेः / अतिस्त्रिणः | अतिस्त्रियोः / अतिस्त्रिणोः | अतिस्त्रीणाम् | सम्ब० |
| स० | अतिस्त्रौ / अतिस्त्रिणि | अतिस्त्रियोः / अतिस्त्रिणोः | अतिस्त्रिषु | अधि० |
| | हे[6] अतिस्त्रे / हे अतिस्त्रि | हे अतिस्त्रिणी | हे अतिस्त्रीणि | सम्बो० |

## [ १०३ ] ह्रस्वान्तः स्त्रीलिङ्गः 'अतिस्त्रि' शब्दः
( स्त्रीको पराजीत करने वाली )

| | | | | |
|---|---|---|---|---|
| प्र० | अँतिस्त्रिः[7] | अतिस्त्रियौ | अतिस्त्रयः | कर्त्ता |
| द्वि० | अतिस्त्रियम् / अतिस्त्रिम् | अतिस्त्रियौ | अतिस्त्रियः / अतिस्त्रीः | कर्म |

---

(१) स्त्रियमतिक्रान्तं कुलम् 'अतिस्त्रि' । 'स्वमोर्नपुंसकात् । (२) 'नपुंसकाच्च' । इति शीभावे इयङं बाधित्वा परत्वात् 'इकोऽचि विभक्तौ'। (३) 'शि सर्वनामस्थानमि' त्युक्तत्वाद्दीर्घः । णत्वम् । (४) इयङं नुमं च बाधित्वा घित्वान्नाभावः । अत्र 'तृतीयादिष्वि'ति पुंवत्वे तदभावे च रूपे न विशेषः अत एवोक्तं कौमुद्यां–'ङेप्रभृताविं'ति । (५)'तृतीयादिष्वि'ति पुंवद्भावपक्षे पुंलिङ्गाऽतिस्त्रिशब्दवत् । पुंवत्वाभावपक्षे तु नुमि'वारि'वत् सर्वं बोध्यम् । (६) वारिवत् । (७) स्त्रियमतिक्रान्ता या इति विग्रहः प्रथमा–द्वितीययोः पुंवत् केवलं शसि नत्वमिति विशेषः ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| तृ० | अतिस्त्रिया[1] | अतिस्त्रिभ्याम् | अतिस्त्रिभिः | करण |
| च० | अतिस्त्रियै[2] अतिस्त्रये | अतिस्त्रिभ्याम् | अतिस्त्रिभ्यः | सम्प्र० |
| पं० | अतिस्त्रियाः अतिस्त्रेः | अतिस्त्रिभ्याम् | अतिस्त्रिभ्यः | अपा० |
| ष० | अतिस्त्रियाः अतिस्त्रेः | अतिस्त्रियोः | अतिस्त्रीणाम् | सम्ब० |
| स० | अतिस्त्रियाम् अतिस्त्रौ | अतिस्त्रियोः | अतिस्त्रिषु | अधि० |
| | हे अतिस्त्रे | हे अतिस्त्रियौ | हे अतिस्त्रयः | सम्बो० |

[ १०४ ] ईकारान्तः स्त्रीलिङ्ग 'श्री' शब्दः ( लक्ष्मी, शोभा )

| | | | | |
|---|---|---|---|---|
| प्र० | श्रीः[3] | श्रियौ[4] | श्रियः | कर्त्ता |
| द्वि० | श्रियम् | श्रियौ | श्रियः | कर्म |
| तृ० | श्रिया | श्रीभ्याम् | श्रीभिः | करण |
| च० | श्रियै-श्रिये[5] | श्रीभ्याम् | श्रीभ्यः | सम्प्र० |
| पं० | श्रियाः-श्रियः | श्रीभ्याम् | श्रीभ्यः | अपा० |
| ष० | श्रियाः-श्रियः | श्रियोः | श्रीणाम्-श्रीयाम् | सम्ब० |

---

(१)स्त्रीलिङ्गत्वाभावे 'इयङ्'। (२) 'ङिति ह्रस्वश्च' इत्यत्र चकारात् इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ नदीसंज्ञौ वा स्तो ङिति परे, इत्यर्थक'ङिति' 'इत्येकं वाक्यम्। ततः-स्त्रीलिङ्गौ ह्रस्वौ चेवर्णोवर्णौ 'नदीसंज्ञौ वास्तो- ङिति परे इत्यर्थक 'ह्रस्वः' इत्यपरं वाक्यम्। एवञ्च अपरवाक्यात् 'अतिस्त्रिशब्दस्य ङित्सु नदीत्वविविकल्पो भवति। 'अस्त्री'ति पर्युदास्तु न-इयङुवङ्स्थानाविति यत्रान्वयेति तत्रैव तत्सम्बन्धस्याऽस्त्रीत्यस्याऽनुवृत्तिरुचितत्वात्। नदीत्वाभावपक्षे तु पुंवत्। (३) श्रयन्ति एताम् इति श्रीः। 'क्विवचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणञ्च' इति क्विप् प्रकृतेर्दीर्घश्च। अङ्यन्तत्वान्न सुलोपः। (४) धात्ववयवत्वात् इयङ्। (५) 'नेयङुवङ्स्थानावस्त्री' इति सूत्रं प्रबाध्य 'ङिति ह्रस्वश्चे'ति नदीत्वो विकल्पः। अभावपक्षे सर्वत्र इयङ्।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| स० | राज्ञि[1] / राजनि | राज्ञोः | राजसु | अधि० |
| | हे राजन्[2] | हे राजानौ | हे राजानः | सम्बो० |

[२००] नकारान्त–पुंल्लिङ्गः 'प्रतिदिवन्' शब्दः ( संपूर्ण प्रकाशवान् )

| | | | | |
|---|---|---|---|---|
| प्र० | प्रतिदिवा[3] | प्रतिदिवानौ | प्रतिदिवानः | कर्त्ता |
| द्वि० | प्रतिदिवानम् | प्रतिदिवानौ | प्रतिदीव्नः[4] | कर्म |
| तृ० | प्रतिदीव्ना | प्रतिदिवभ्याम्[5] | प्रतिदिवभिः | करण |
| च० | प्रतिदीव्ने | प्रतिदिवभ्याम् | प्रतिदिवभ्यः | सम्प्र० |
| पं० | प्रतिदीव्नः | प्रतिदिवभ्याम् | प्रतिदिवभ्यः | अपा० |
| ष० | प्रतिदीव्नः | प्रतिदीव्नोः | प्रतिदीव्नाम् | सम्ब० |
| स० | प्रतिदीव्नि | प्रतिदीव्नोः | प्रतिदिवसु | अधि० |
| | हे प्रतिदिवन् | हे प्रतिदिवानौ | हे प्रतिदिवानः | सम्बो० |

एवं महिमन्, अणिमन्, गरिमन्, लघिमन्, इत्यादयोऽपि ।

[ २०१ ] नकारान्त–पुंल्लिङ्गो 'यज्वन्' शब्दः ( यज्ञ करने वाला )

| | | | | |
|---|---|---|---|---|
| प्र० | यज्वा[6] | यज्वानौ | यज्वानः | कर्ता |
| द्वि० | यज्वानम् | यज्वानौ | यज्वनः[7] | कर्म |
| तृ० | यज्वना | यज्वभ्याम् | यज्वभिः | करण |

---

(१) 'विभाषा ङिश्योः' । (२) 'न ङिसम्बुद्ध्योः' । (३) प्रति दीव्यतीति प्रतिदिवा । उक्तोणादिसूत्रेण कनिनि, उपधादीर्घसुलोपनलोपाः । (४) शसादावचि भत्वादल्लोपे 'हलि चे'ति दीर्घः, दीर्घे कर्तव्ये अल्लोपस्य स्थानिवत्त्वन्तु न 'न पदान्ते'ति दीर्घविधौ तन्निषेधात् । बहिरङ्गपरिभाषा तु षष्ठाध्यायीस्थत्वेन अत्राऽपि न प्रवर्तते । (५) भ्यामादौ हलि राजवत् बोध्यम् । (६) 'सुयजो-र्ङ्वनिप्' इति यज्धातोर्ङ्वनिप् । कित्वाभावात् सम्प्रसारणं न, सुटि भ्यामादौ हलि च राजवत् । (७) शसादावचि भत्वादल्लोपे प्राप्ते 'न संयोगाद्वमन्तात्' इति निषेधः । शेषकार्यं राजन्शब्दवत् ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| स० | सुगणि | सुगणोः | सुगणट्सु[1] / सुगणट्सु / सुगण्सु | अधि० |
| | हे सुगण् | हे सुगणौ | हे सुगणः | सम्बो० |

क्विपि तु—सुगाण्[2] सुगाणौ सुगाणः इत्यादि ।

[ १९९ ] नकारान्त–पुंल्लिङ्गो 'राजन्' शब्दः ( राजा )

| | | | | |
|---|---|---|---|---|
| प्र० | राजा[3] | राजानौ[4] | राजानः | कर्त्ता |
| द्वि० | राजानम् | राजानौ | राज्ञः[5] | कर्म |
| तृ० | राज्ञा | राजभ्याम्[6] | राजभिः | करण |
| च० | राज्ञे | राजभ्याम् | राजभ्यः[8] | सम्प्र० |
| पं० | राज्ञः | राजभ्याम् | राजभ्यः | अपा० |
| ष० | राज्ञः | राज्ञोः | राज्ञाम् | सम्ब० |

---

(१) 'ङ्णोः कुक्टुक्शरि' इति टुकि 'चयो द्वितीया' इति टस्य ठः । (२) 'अनुनासिकस्य क्विझलोः' इति दीर्घः स्यादिति भावः । (३) 'राजृ दीप्तौ' अस्मात् 'कनिन् यु–वृषि–तक्षि–राजि–धन्वि–द्यु–प्रति–दिवः' इत्युणादिसूत्रेण कनिन् । ततः राजन् शब्दात् सौ उपधादीर्घे सुलोपे नलोपः । (४) सर्वनामस्थानत्वाद्दीर्घः । (५) शसादावचि भत्वात् 'अल्लोपोनः' इत्यल्लोपे नकारस्य श्चुत्वे जयोर्ज्ञः । अल्लोपस्य स्थानिवत्त्वात् श्चुत्वं न स्यादिति न शङ्क्यम्, 'पूर्वत्रासिद्धे न स्थानिवत्' इति निषेधात् । नाऽप्यन्तरङ्गपरिभाषायाः प्रवृत्तिः, यथोद्देशपक्षे 'वाह ऊठ' इति ज्ञापितायाः तस्याः षष्ठाध्यायीस्थत्वेन परिभाषादृष्ट्या त्रैपादिकस्य श्चुत्वस्यैवाऽसिद्धत्वात् । एकतरपक्षेण लक्ष्यसिद्धे पक्षान्तरेण दोषदानस्याऽनुचितत्वादिति कार्यकालपक्षाश्रयणेनात्र दोषदानमुचितमिति दिक् । (६–८) 'स्वादिष्वि'ति पदत्वात् नलोपे सति भ्यामि दीर्घः, भिसः ऐस्, भ्यसि एत्वन्तु न, नलोपस्याऽसिद्धत्वात् । नचैवं 'राजाश्व' इत्यादावपि नलोपस्याऽसिद्धत्वात् सवर्णदीर्घो न स्यादिति वाच्यम्, 'न लोपः सुप्स्वर' इति नियमसूत्रस्य जागरूकत्वात् ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| स० | राज्ञि[1] / राजनि | राज्ञोः | राजसु | अधि० |
| | हे राजन्[2] | हे राजानौ | हे राजानः | सम्बो० |

[२००] नकारान्त–पुंल्लिङ्गः 'प्रतिदिवन्' शब्दः ( संपूर्ण प्रकाशवान् )

| | | | | |
|---|---|---|---|---|
| प्र० | प्रतिदिवा[3] | प्रतिदिवानौ | प्रतिदिवानः | कर्त्ता |
| द्वि० | प्रतिदिवानम् | प्रतिदिवानौ | प्रतिदीव्नः[4] | कर्म |
| तृ० | प्रतिदीव्ना | प्रतिदिवभ्याम्[5] | प्रतिदिवभिः | करण |
| च० | प्रतिदीव्ने | प्रतिदिवभ्याम् | प्रतिदिवभ्यः | सम्प्र० |
| पं० | प्रतिदीव्नः | प्रतिदिवभ्याम् | प्रतिदिवभ्यः | अपा० |
| ष० | प्रतिदीव्नः | प्रतिदीव्नोः | प्रतिदीव्नाम् | सम्ब० |
| स० | प्रतिदीव्नि | प्रतिदीव्नोः | प्रतिदिवसु | अधि० |
| | हे प्रतिदिवन् | हे प्रतिदिवानौ | हे प्रतिदिवानः | सम्बो० |

एवं महिमन्, अणिमन्, गरिमन्, लघिमन्, इत्यादयोऽपि।

[ २०१ ] नकारान्त–पुंल्लिङ्गो 'यज्वन्' शब्दः ( यज्ञ करने वाला )

| | | | | |
|---|---|---|---|---|
| प्र० | यज्वा[6] | यज्वानौ | यज्वानः | कर्ता |
| द्वि० | यज्वानम् | यज्वानौ | यज्वनः[7] | कर्म |
| तृ० | यज्वना | यज्वभ्याम् | यज्वभिः | करण |

---

(१) 'विभाषा ङिश्योः'। (२) 'न ङिसम्बुद्ध्योः'। (३) प्रति दीव्यतीति प्रतिदिवा। उक्तोणादिसूत्रेण कनिनि, उपधादीर्घसुलोपनलोपाः। (४) शसादावचि भत्वादल्लोपे 'हलि चे'ति दीर्घः, दीर्घे कर्तव्ये अल्लोपस्य स्थानिवत्वन्तु न 'न पदान्ते'ति दीर्घविधौ तन्निषेधात्। बहिरङ्गपरिभाषा तु षष्ठाध्यायीस्थत्वेन अत्राऽपि न प्रवर्तते। (५) भ्यामादौ हलि राजवत् बोध्यम्। (६) 'सुयजो-ङ्वनिप्' इति यज्धातोर्ङ्वनिप्। कित्वाभावात् सम्प्रसारणं न, सुटि भ्यामादौ हलि च राजवत्। (७) शसादावचि भत्वादल्लोपे प्राप्ते 'न संयोगाद्वमन्तात्' इति निषेधः। शेषकार्यं राजन्शब्दवत्।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| च० | यज्वने | यज्वभ्याम् | यज्वभ्यः | सम्प्र० |
| पं० | यज्वनः | यज्वभ्याम् | यज्वभ्यः | अपा० |
| ष० | यज्वनः | यज्वनोः | यज्वनाम् | सम्ब० |
| स० | यज्वनि | यज्वनोः | यज्वसु | अधि० |
| | हे यज्वन् | हे यज्वानौ | हे यज्वानः | |

[ २०२ ] नकारान्त–पुंलिङ्गो 'ब्रह्मन्' शब्दः ( ब्रह्मा )

| | | | | |
|---|---|---|---|---|
| प्र० | ब्रह्मा[1] | ब्रह्माणौ | ब्रह्माणः | कर्ता |
| द्वि० | ब्रह्माणम् | ब्रह्माणौ | ब्रह्मणः[2] | कर्म |
| तृ० | ब्रह्मणा | ब्रह्मभ्याम् | ब्रह्मभिः | करण |
| च० | ब्रह्मणे | ब्रह्मभ्याम् | ब्रह्मभ्यः | सम्प्र० |
| पं० | ब्रह्मणः | ब्रह्मभ्याम् | ब्रह्मभ्यः | अपा० |
| ष० | ब्रह्मणः | ब्रह्मणोः | ब्रह्मणाम् | सम्ब० |
| स० | ब्रह्मणि | ब्रह्मणोः | ब्रह्मसु | अधि० |
| | हे ब्रह्मन् | हे ब्रह्माणौ | हे ब्रह्माणः | सम्बो० |

[ २०३ ] नकारान्त-पुंलिङ्ग 'आत्मन्' शब्दः ( आत्मा )

| | | | | |
|---|---|---|---|---|
| प्र० | आत्मा[3] | आत्मानौ | आत्मानः | कर्ता |
| द्वि० | आत्मानम् | आत्मानौ | आत्मनः | कर्म |
| तृ० | आत्मना | आत्मभ्याम् | आत्मभिः | करण |
| च० | आत्मने | आत्मभ्याम् | आत्मभ्यः | सम्प्र० |

(१) 'बृहि वृद्धौ' अस्मात् 'सर्वधातुभ्यो मनिन्' इत्युणादिसूत्रेण मनिनि 'बृंहेर्नोच्च' इति इदित्वान्नुमा निष्पन्नस्य नकारस्य अकारे ऋकारस्य यणादेशे ब्रह्मन्शब्दः "ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः" इत्यमरः। (२) शसादावचि 'न संयोगादि'ति अल्लोपनिषेधः। शेषकार्यं राजन् शब्दवत् ज्ञेयम्। (३) लोके प्रचुरप्रयोगदर्शनादत्र लिखितम्, 'ब्रह्मन्' शब्दवत् कार्यं बोध्यम्, णत्वाऽभावश्चात्र विशेषः।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| पं० | आत्मनः | आत्मभ्याम् | आत्मभ्यः | अपा० |
| ष० | आत्मनः | आत्मनोः | आत्मनाम् | सम्ब० |
| स० | आत्मनि | आत्मनोः | आत्मसु | अधि० |
| | हे आत्मन् | हे आत्मानौ | हे आत्मानः | सम्बो० |

एवं कृष्णवर्त्मन्–अनर्वन्–इत्यादयो मकारान्त–वकारान्त–संयोगादयोऽन्नन्ताः ।

[ २०४ ] नकारान्त-पुँल्लिङ्गो 'वृत्रहन्' शब्दः ( इन्द्र )

| | | | | |
|---|---|---|---|---|
| प्र० | वृत्रहा(१) | वृत्रहणौ(२) | वृत्रहणः | कर्ता |
| द्वि० | वृत्रहणम् | वृत्रहणौ | वृत्रघ्नः(३) | कर्म |
| तृ० | वृत्रघ्ना | वृत्रहभ्याम् | वृत्रहभिः | करण |
| च० | वृत्रघ्ने | वृत्रहभ्याम् | वृत्रहभ्यः | सम्प्र० |
| पं० | वृत्रघ्नः | वृत्रहभ्याम् | वृत्रहभ्यः | अपा० |
| ष० | वृत्रघ्नः | वृत्रघ्नोः | वृत्रघ्नाम् | सम्ब० |
| स० | वृत्रघ्नि(४) वृत्रहणि | वृत्रघ्नोः | वृत्रहसु | अधि० |
| | हे वृत्रहन्(५) | हे वृत्रहणौ | हे वृत्रहणः | सम्बो० |

[२०५] नकारान्त-पुंल्लिङ्गः 'शार्ङ्गिन्' शब्दः ( भगवान् विष्णु )

---

(१) वृत्रं हतवानित्यर्थे 'ब्रह्मभ्रूणे'ति हन्धातोः क्विप् । उपपदसमासः । ततः सौ 'इन्हन्नि'त्यनेन शावेव दीर्घः इति नियमात् उपधादीर्घेऽप्राप्ते 'सौ च' इति दीर्घे सुलोपनलोपौ । (२) समानपदत्वाभावात् 'एकाजि'ति णत्वम् । उपधा दीर्घस्तु न, शावेवेति नियमात् । (३) शसादावचि भसंज्ञायामल्लोपे 'हो हन्ते-रि'ति कुत्वे च कृते 'अनन्तरस्ये'ति न्यायात् 'हन्तेः' इति प्राप्तस्यैव णत्वस्य 'अ-त्पूर्वस्ये'ति निषेधात् सूत्राऽन्तरेणात्र णत्वं दुर्वारमिति न शङ्क्यम्, 'अत्पूर्वस्ये'ति पृथग् योगविभागसामर्थ्यादुक्तन्यायं बाधित्वा 'प्रातिपदिकान्ते'ति, 'एकाजुत्तरे'ति, 'कुमति चे'ति च प्राप्तस्य णत्वमात्रस्य तेन निषेधात् । (४) 'विभाषा ङिश्योः । (५) असम्बुद्धावित्युक्तत्वेन 'सौ च' इति न दीर्घः ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | शार्ङ्गी[1] | शार्ङ्गिणौ[2] | शार्ङ्गिणः | कर्त्ता |
| द्वि० | शार्ङ्गिणम् | शार्ङ्गिणौ | शार्ङ्गिणः[3] | कर्म |
| तृ० | शार्ङ्गिणा | शार्ङ्गिभ्याम् | शार्ङ्गिभिः | करण |
| च० | शार्ङ्गिणे | शार्ङ्गिभ्याम् | शार्ङ्गिभ्यः | सम्प्र० |
| पं० | शार्ङ्गिणः | शार्ङ्गिभ्याम् | शार्ङ्गिभ्यः | अपा० |
| ष० | शार्ङ्गिणः | शार्ङ्गिणोः | शार्ङ्गिणाम् | सम्ब० |
| स० | शार्ङ्गिणि | शार्ङ्गिणोः | शार्ङ्गिषु | अधि० |
| | हे शार्ङ्गिन् | हे शार्ङ्गिणौ | हे शार्ङ्गिणः | सम्बो० |

[२०६] नकारान्त-पुंलिङ्गो 'यशस्विन्' शब्दः ( यशस्वी )

| | | | | |
|---|---|---|---|---|
| प्र० | यशस्वी[4] | यशस्विनौ | यशस्विनः | कर्त्ता |
| द्वि० | यशस्विनम् | यशस्विनौ | यशस्विनः | कर्म |
| तृ० | यशस्विना | यशस्विभ्याम् | यशस्विभिः | करण |
| च० | यशस्विने | यशस्विभ्याम् | यशस्विभ्यः | सम्प्र० |
| पं० | यशस्विनः | यशस्विभ्याम् | यशस्विभ्यः | अपा० |
| ष० | यशस्विनः | यशस्विनोः | यशस्विनाम् | सम्ब० |
| स० | यशस्विनि | यशस्विनोः | यशस्विषु | अधि० |
| | हे यशस्विन् | हे यशस्विनौ | हे यशस्विनः | सम्बो० |

---

(१) शार्ङ्गम्=धनुः, तदस्याऽस्तीति 'शार्ङ्गी' 'अत इनि ठनौ' इति इनिः। ततः सौ 'सौ च' इति दीर्घे सुलोप नलोपौ। (२) इनन्तत्वेन 'इन्हन्नि'ति नियमात् दीर्घाऽभावे णत्वम्। (३) अन्नन्तत्वाऽभावादल्लोपो न। (४) यशोऽस्यातीति यशस्वी। 'अयस्मयामेधास्रजो विनिः' इति विनिः। 'तसौ मत्वर्थे' इति भत्वान्न रुत्वम्। शार्ङ्गिन् शब्दवत् कार्यं ज्ञेयम्। नच अर्थवदिति परिभाषया 'इन् हन्'इति सूत्रेऽर्थवदेव इनो ग्रहणात् 'शार्ङ्गिन्' इत्यत्रैव इनोऽर्थवत्त्वात् दीर्घः, यशस्वीत्यत्र तु अनर्थकत्वान्न स्यादिति वाच्यम्, 'अन्-इन्-अस्-मन्-ग्रहणानि ( शास्त्राणि ) अर्थवता च अनर्थकेन च तदन्तविधिं प्रयोजयन्ति' इति 'येनविधि'रिति सूत्रस्थभाष्योक्तवचनेनादोषात्।

## [२०७] नकारान्त-पुंल्लिङ्गो 'गुणिन्' शब्दः ( गुणवान् )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | गुणी[1] | गुणिनौ | गुणिनः | कर्ता |
| द्वि० | गुणिनम् | गुणिनौ | गुणिनः | कर्म |
| तृ० | गुणिना | गुणिभ्याम् | गुणिभिः | करण |
| च० | गुणिने | गुणिभ्याम् | गुणिभ्यः | सम्प्र० |
| पं० | गुणिनः | गुणिभ्याम् | गुणिभ्यः | अपा० |
| ष० | गुणिनः | गुणिनोः | गुणिनाम् | सम्ब० |
| स० | गुणिनि | गुणिनोः | गुणिषु | अधि० |
| | हे गुणिन् | हे गुणिनौ | हे गुणिनः | सम्बो० |

एवं कारिन्-बलिन्-चक्रिन्-इत्यादयः इन्नन्ताः ।

## [ २०८ ] नकारान्त-पुंल्लिङ्गः 'अर्यमन्' शब्दः ( सूर्य )

| | | | | |
|---|---|---|---|---|
| प्र० | अर्यमा[2] | अर्यमणौ | अर्यमणः | कर्त्ता |
| द्वि० | अर्यमणम् | अर्यमणौ | अर्यमणः | कर्म |
| तृ० | अर्यमणा | अर्यमभ्याम् | अर्यमभिः | करण |
| च० | अर्यमणे | अर्यमभ्याम् | अर्यमभ्यः | सम्प्र० |
| पं० | अर्यमणः | अर्यमभ्याम् | अर्यमभ्यः | अपा० |
| ष० | अर्यमणः | अर्यमणोः | अर्यमणाम् | सम्ब० |
| स० | { अर्यम्णि / अर्यमणि | अर्यमणोः | अर्यमसु | अधि० |
| | हे अर्यमन् | हे अर्यमणौ | हे अर्यमणः | सम्बो० |

---

(१) गुणोऽस्यास्तीति गुणी । शार्ङ्गिन् शब्दवत् कार्यं बोध्यम् । (२) 'श्वन्-उक्षन्-पूषन्-प्लीहन्-क्लेदन्-स्नेहन्-मूर्धन्-मज्जन्-अर्यमन्-विश्वप्सन्-परिज्मन्-मातरिश्वन्-मघवन्' इत्युणादिसूत्रेण कनिप्रत्ययान्तः अर्यमन् शब्दः तस्य साधनकार्यं 'वृत्रहन्' शब्दवत् बोध्यम् । तत्र कुत्वमात्रं विशेषः इति न विस्मर्तव्यम् ।

## [ २०९ ] नकारान्तः-पुंल्लिङ्गः 'पूषन्' शब्दः ( सूर्य )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | पूषा[1] | पूषणौ | पूषणः | कर्त्ता |
| द्वि० | पूषणम् | पूषणौ | पूषणः | कर्म |
| तृ० | पूष्णा | पूषभ्याम् | पूषभिः | करण |
| च० | पूष्णे | पूषभ्याम् | पूषभ्यः | सम्प्र० |
| पं० | पूष्णः | पूषभ्याम् | पूषभ्यः | अपा० |
| ष० | पूष्णः | पूष्णोः | पूष्णाम् | सम्ब० |
| स० | पूष्णि / पूषणि | पूष्णोः | पूषसु | अधि० |
| | हे पूषन् | हे पूषणौ | हे पूषणः | सम्बो |

एवं भ्रूणहन् ( गर्भको नष्ट करने वाला ) इत्यादयः।

## (२१०) नकारान्त-पुंल्लिङ्गो 'मघवन्' शब्दः ( इन्द्र )

| | | | | |
|---|---|---|---|---|
| प्र० | मघवान्[2] | मघवन्तौ | मघवन्तः | कर्ता |
| द्वि० | मघवन्तम् | मघवन्तौ | मघवतः | कर्म |

---

(१) वृत्रहन् शब्दवत् कार्यं ज्ञेयम्। (२) मह्यते पूज्यते इति मघवान् 'श्वन्नुक्षन्नि'त्यादिसूत्रेण निपातनात् मह्धातोः कनिः, अवुगागमः, हस्य घश्च भवति। ततः सौ 'मघवा बहुलम्' इति तृत्वे ऋकारस्य इत्संज्ञायां लोपे च 'उगिदचामि'ति नुमि सुलोपे संयोगान्तलोपे च उपधादीर्घः। नचेह दीर्घे कर्तव्ये संयोगान्तलोपस्याऽसिद्धत्वं कुतो नेति चेत्सत्यम्, 'मघा बहुलमि'ति सूत्रस्थ बहुलग्रहणेन दीर्घे कर्तव्ये संयोगान्तलोपस्याऽसिद्धत्वाऽभावकल्पनेनाऽदोषात्। अयम्भावः—लोके वेदे च 'श्वन्नुक्षन्नि'त्युणादिसूत्रेण निपातनात् "मघवन्" शब्दात्, तथा च मघः=धनम्, अस्यास्तीत्यर्थे धनपर्यायात् मघशब्दात् मतुपि 'मादुपधायाश्चे'ति वत्वे "मघवत्" शब्दाच्च 'मघवा' 'मघवान्' इत्युभयरूपं साध्य 'मघवा बहुलमि'ति सूत्रं प्रत्याख्यातं भाष्ये। तदसंगतिः स्यात्, सूत्रसत्तायां संयोगान्तलोपस्याऽसिद्धत्वे 'मघवन्' 'मघवा'

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| तृ० | मघवता | मघवद्भ्याम् | मघवद्भिः | करण |
| च० | मघवते | मघवद्भ्याम् | मघवद्भ्यः | सम्प्र० |
| पं० | मघवतः | मघवद्भ्याम् | मघवद्भ्यः | अपा० |
| ष० | मघवतः | मघवतोः | मघवताम् | सम्ब० |
| स० | मघवति | मघवतोः | मघवत्सु | अधि० |
| | हे मघवन् | हे मघवन्तौ | हे मघवन्तः | सम्बो० |

[२११] नकारान्तः तृत्वाऽभावे स एव 'मघवन्' शब्दः ।

| | | | | |
|---|---|---|---|---|
| प्र० | मघवा[1] | मघवानौ | मघवानः | कर्ता |
| द्वि० | मघवानम् | मघवानौ | मघोनः[2] | कर्म |
| तृ० | मघोना | मघवभ्याम्[3] | मघवभिः | करणं |
| च० | मघोने | मघवभ्याम् | मघवभ्यः | सम्प्र० |
| पं० | मघोनः | मघवभ्याम् | मघवभ्यः | अपा० |
| ष० | मघोनः | मघोनोः | मघोनाम् | सम्ब० |
| स० | मघोनि | मघोनोः | मघवसु | अधि० |
| | हे मघवन् | हे मघवानौ | हे मघवानः | सम्बो० |

[ २१२ ] नकारान्त-पुंलिङ्गः 'श्वन्' शब्दः ( कुत्ता )

| | | | | |
|---|---|---|---|---|
| प्र० | श्वा[4] | श्वानौ | श्वानः | कर्त्ता |
| द्वि० | श्वानम् | श्वानौ | शुनः[5] | कर्म |

---

इत्यस्यैव सिद्धिः स्यान्न तु 'मघवान्' इत्यस्येति तस्मादारम्भप्रत्याख्यानयोः फलैक्याय बहुलग्रहणमुक्तार्थे ज्ञापकमिति तत्त्वविदः । अत एव "हविर्यक्षिति निःशङ्को मखेषु मघवानसौ" इति भट्टिवाक्ये 'मघवान्' इत्युक्तिः संगच्छते । (१) तृत्वाऽभावे सुटि राजवत् । (२) शसादावचि तु भत्वे 'श्वयुवमघोनाम्' इति सम्प्रसारणे पूर्वरूपे गुणः । (३) भ्यामादौ हलि 'स्वादिष्वि'ति पदत्वान्नलोपः । (४) 'श्वन्नुक्षन्नि'त्युणादिसूत्रेण कनि-प्रत्ययान्तः । सुटि राजवत् । (५) शसादावचि भत्वे 'श्वयुवे'ति सम्प्रसारणे पूर्वरूपे रुत्वविसर्गौ ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| तृ० | शुना | श्वभ्याम्[1] | श्वभिः | करण |
| च० | शुने | श्वभ्याम् | श्वभ्यः | सम्प्र० |
| पं० | शुनः | श्वभ्याम् | श्वभ्यः | अपा० |
| ष० | शुनः | शुनोः | शुनाम् | सम्ब० |
| स० | शुनि | शुनोः | श्वसु | अधि० |
| | हे श्वन् | हे श्वानौ | हे श्वानः | सम्बो० |

[ २१३ ] नकारान्त–पुंलिङ्गो 'युवन्' शब्दः ( युवा )

| | | | | |
|---|---|---|---|---|
| प्र० | युवा[2] | युवानौ | युवानः | कर्त्ता |
| द्वि० | युवानम् | युवानौ | यूनः[3] | कर्म |
| तृ० | यूना | युवभ्याम् | युवभिः | करण० |
| च० | यूने | युवभ्याम् | युवभ्यः | सम्प्र० |
| पं० | यूनः | युवभ्याम् | युवभ्यः | अपा० |
| ष० | यूनः | यूनोः | यूनाम् | सम्ब० |
| स० | यूनि | यूनोः | युवसु | अधि० |
| | हे युवन् | हे युवानौ | हे युवानः | सम्बो० |

[ २१४ ] नकारान्त–पुंलिङ्गः 'अर्वन्' शब्दः ( घोड़ा )

| | | | | |
|---|---|---|---|---|
| प्र० | अर्वा[4] | अर्वन्तौ[5] | अर्वन्तः | कर्त्ता |

(१) भ्यामादौ हलि पत्वान्नलोपः। (२) यौतीति 'युवा'। युधातोः 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इत्युणादिसूत्रेण कनिनि उवङादेशः। युवन् शब्दोऽपि सुटि राजवत्। (३) शसादावचि 'श्वयुवमघोनामि'ति वकारस्य सम्प्रसारणे पूर्वरूपे सवर्णदीर्घे रुत्वविसर्गौ। एवं सिद्धे सति यकारस्याऽपि सम्प्रसारणन्तु न 'अचः परस्मिन्नि'ति स्थानिवत्वात् सम्प्रसारणपरत्वेन 'न सम्प्रसारणे' इति निषेधात्। यत्तु यकारस्य सम्प्रसारणे कृते वकारस्य सम्प्रसारणं कुतोनेत्युक्तं तन्न उक्तसूत्रस्य वैयर्थ्यादिति दिक्। (४) ऋधातोः 'अन्येभ्योऽपि दृश्यते' इति वनिपि गुणे रपरत्वे 'अर्वन्' शब्दः। ततः सौ राजवत्। (५) 'अर्वणस्त्रसावनञः' इति नकारस्य आदेशे ऋकारस्येत्संज्ञायां लोपे च नुमि अनुस्वारपरसवर्णौ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| द्वि० | अर्वन्तम् | अर्वन्तौ | अर्वतः[1] | कर्म |
| तृ० | अर्वता | अर्वद्भ्याम्[2] | अर्वद्भिः | करण |
| च० | अर्वते | अर्वद्भ्याम् | अर्वद्भ्यः | सम्प्र० |
| पं० | अर्वतः | अर्वद्भ्याम् | अर्वद्भ्यः | अपा० |
| ष० | अर्वतः | अर्वतोः | अर्वताम् | सम्ब० |
| स० | अर्वति | अर्वतोः | अर्वत्सु | अधि० |
| | हे अर्वन् | हे अर्वन्तौ | हे अर्वन्तः | सम्बो० |

### [ २१५ ] नकारान्त–पुंलिङ्गः 'पथिन्' शब्दः ( रास्ता )

| | | | | |
|---|---|---|---|---|
| प्र० | पन्थाः[3] | पन्थानौ[4] | पन्थानः | कर्ता |
| द्वि० | पन्थानम् | पन्थानौ | पथः[5] | कर्म |
| तृ० | पथा | पथिभ्याम्[6] | पथिभिः | करण |
| च० | पथे | पथिभ्याम् | पथिभ्यः | सम्प्र० |
| पं० | पथः | पथिभ्याम् | पथिभ्यः | अपा० |
| ष० | पथः | पथोः | पथाम् | सम्ब० |
| स० | पथि | पथोः | पथिषु | अधि० |
| | हे पन्थाः | हे पन्थानौ | हे पन्थानः | सम्बो० |

### [ २१६ ] नकारान्त–पुंलिङ्गो 'मथिन्' शब्दः
### ( दूध, दही आदि मथन करने वाला दण्ड )

---

(१) शसादावचि असर्वनामस्थानत्वान्न नुम् । (२) 'स्वादिष्वि'ति पदत्वात् भ्यामादौ हलि जश्त्वम्, सुपि तु खर्परत्वात् चर्त्वमपीति विशेषः । (३) 'पत्लृ गतौ' अस्मात् 'पतस्थ च' इत्युणादिसूत्रेण इनिस्थकारश्चान्तादेशे 'पथिन्' शब्दः । ततः सौपरे 'पथिमथ्यृभुक्षामात्' इति नकारस्याऽऽत्वे 'इतोऽत्सर्वनामस्थाने' इतीकारस्याऽकारे 'थोन्थः' इति न्थादेशे सवर्णदीर्घे रुत्वविसर्गौ । (४) अजादौसुटि इकारस्याऽकारादेशे थकारस्य न्थादेशे च उपधादीर्घः । (५) शसादावचि भत्वे 'भस्य टेर्लोपः' इति इनो लोपः (६) भ्यामादिहलादौ .५८१

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | मन्था[1]ः | मन्थानौ | मन्थानः | कर्त्ता |
| द्वि० | मन्थानम् | मन्थानौ | मथः | कर्म |
| तृ० | मथा | मथिभ्याम् | मथिभिः | करण |
| च० | मथे | मथिभ्याम् | मथिभ्यः | सम्प्र० |
| पं० | मथः | मथिभ्याम् | मथिभ्यः | अपा० |
| ष० | मथः | मथोः | मथाम् | सम्ब० |
| स० | मथि | मथोः | मथिषु | अधि० |
| | हे मन्थाः | हे मन्थानौ | हे मन्थानः | सम्बो० |

[ २१७ ] नकारान्त–पुंल्लिङ्गः 'ऋभुक्षिन्' शब्दः ( इन्द्र )

| | | | | |
|---|---|---|---|---|
| प्र० | ऋभुक्षा[2]ः | ऋभुक्षाणौ | ऋभुक्षाणः | कर्त्ता |
| द्वि० | ऋभुक्षाणम् | ऋभुक्षाणौ | ऋभुक्षः | कर्म |
| तृ० | ऋभुक्षा | ऋभुक्षिभ्याम् | ऋभुक्षिभिः | करण |
| च० | ऋभुक्षे | ऋभुक्षिभ्याम् | ऋभुक्षिभ्यः | सम्प्र० |
| पं० | ऋभुक्षः | ऋभुक्षिभ्याम् | ऋभुक्षिभ्यः | अपा० |
| ष० | ऋभुक्षः | ऋभुक्षोः | ऋभुक्षाम् | सम्ब० |
| स० | ऋभुक्षि | ऋभुक्षोः | ऋभुक्षिषु | अधि० |
| | हे ऋभुक्षाः | हे ऋभुक्षाणौ | हे ऋभुक्षाणः | सम्बो० |

[ २१८ ] नकारान्त–स्त्रीलिङ्गः 'सुपथिन्' शब्दः

( सुन्दर रास्ता वाली नगरी )

---

सुपि तु षत्वमपीति विशेषः । (१) "मन्था मन्थनदण्डे च वज्र वातेऽपि च स्मृतः" इति कोशः । 'मन्थ विलोडने' । अस्मात् इनिः किरस्यादित्यर्थक 'मन्थः' इत्युणादिसूत्रेण निष्पन्नो 'मथिन्' शब्दः । कित्वान्नलोपो बोध्यः । अन्यत् कार्यं 'पथिन्' शब्दवत् । (२) अत्र 'थोन्थः' इति वर्जमाऽऽत्वादिकार्यं 'पथिन्' शब्दवत् ज्ञेयम् , पात्परत्वात् णत्वमिति विशेषः ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | सुपथी[1] | सुपथ्यौ | सुपथ्यः | कर्त्ता |
| द्वि० | सुपथीम् | सुपथ्यौ | सुपथीः | कर्म |
| तृ० | सुपथ्याः | सुपथीभ्याम् | सुपथीभिः | करण |
| च० | सुपथ्यै | सुपथीभ्याम् | सुपथीभ्यः | सम्प्र० |
| पं० | सुपथ्याः | सुपथीभ्याम् | सुपथीभ्यः | अपा० |
| ष० | सुपथ्याः | सुपथ्योः | सुपथीनाम् | सम्ब० |
| स० | सुपथ्याम् | सुपथ्यौ | सुपथीषु | अधि० |
| | हे सुपथि | हे सुपथ्यौ | हे सुपथ्यः | सम्बो० |

एवं सुमथी सुमथ्यौ सुमथ्यः इत्यादि सुपथिन्वत् ।

## [ २१९ ] नकारान्त--स्त्रीलिङ्गः 'अनृभुक्षिन्' शब्दः

( सेनापति ( कमाण्डर ) के विना सेना )

| | | | | |
|---|---|---|---|---|
| प्र० | अनृभुक्षी[2] | अनृभुक्ष्यौ | अनृभुक्ष्यः | कर्त्ता |
| द्वि० | अनृभुक्षीम् | अनृभुक्ष्यौ | अनृभुक्षीः | कर्म |
| तृ० | अनृभुक्ष्याः | अनृभुक्षीभ्याम् | अनृभुक्षीभिः | करण |
| च० | अनृभुक्ष्यै | अनृभुक्षीभ्याम् | अनृभुक्षीभ्यः | सम्प्र० |

(१) प्रसंगात् स्त्रियामपि रूपमाह । सु=शोभनः, पन्थाः अस्यां=नगर्याम् , इति बहुव्रीहौ 'ऋन्नेभ्यः' इति ङीपि 'भस्यटेर्लोपः इति इनो लोपः । 'न पूजनात्' इति निषेधात् 'ऋक्पूरब्धूः' इत्यप्रत्ययो न भवति । एवम् 'इनः स्त्रियाम्' इति कप्प्रत्ययोऽपि न 'युवोरनाकौ' इत्यत्र 'सुपथी'ति भाष्योक्तत्वेन तस्थाऽनित्यत्वात् । 'न पूजनादि'त्यत्र निषेधस्तु न, तस्य षचः प्रागेव प्रवृत्तेरिति सिद्धान्तात् । एवञ्च 'गौरी' शब्दवदत्र कार्यं ज्ञेयम् । नच 'लिङ्गविशिष्टे'ति परिभाषया 'पथिमथी'त्यावं 'थो न्थः' इति न्थादेशश्च कुतो नेति वाच्यम् , विभक्तौ लिङ्गविशिष्टाऽग्रहणात् । (२) इदमपि प्रसङ्गादाह । अविद्यमानः ऋभुक्षाः यस्याः इति विग्रहे 'नञोऽस्त्यर्थानामि'ति समासः । ऋभुक्षाशब्दोऽत्र स्वामीपर्यायः 'गौरी' वत् कार्यं ज्ञेयम् ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| पं० | अनूभुक्ष्याः | अनूभुक्षीभ्याम् | अनूभुक्षीभ्यः | अपा० |
| ष० | अनूभुक्ष्याः | अनूभुक्ष्योः | अनूभुक्षीणाम् | सम्ब० |
| स० | अनूभुक्ष्याम् | अनूभुक्ष्योः | अनूभुक्षीषु | अधि० |
| | हे अनूभुक्षि | हे अनूभुक्ष्यौ | हे अनूभुक्ष्यः | सम्बो० |

[ २२० ] नकारान्त--नपुंसकलिङ्गः 'सुपथिन्' शब्दः

( सुन्दर रास्ता वाला वन )

| | | | | |
|---|---|---|---|---|
| प्र० | सुपथि[1] | सुपथी[2] | सुपन्थानि[3] | कर्त्ता |
| द्वि० | सुपथि | सुपथी | सुपन्थानि[4] | कर्म |
| तृ० | सुपथा[5] | सुपथिभ्याम्[6] | सुपथिभिः | करण |
| च० | सुपथे | सुपथिभ्याम् | सुपथिभ्यः | सम्प्र० |
| पं० | सुपथः | सुपथिभ्याम् | सुपथिभ्यः | अपा० |
| ष० | सुपथः | सुपथोः | सुपथाम् | सम्ब० |
| स० | सुपथि | सुपथोः | सुपथिषु | अधि० |
| | { हे सुपथि[7] / हे सुपथिन् | हे सुपथी | हे सुपन्थानि | सम्बो० |

[ २२१ ] नकारान्त-पुंल्लिङ्गः 'प्रियपञ्चन्' शब्दः

( ५ ठो प्रिय है जिसको ऐसा पुरुष )

---

(१) इदमपि प्रसङ्गादाह । सु=शोभनः पन्थाः अस्य वनस्येति बहुव्रीहिः । ततः नपुंसकत्वात् सुब्लुकि । आत्वन्तु न, 'न लुमते'ति प्रत्ययलक्षणनिषेधात् । (२) औङः शीभावे असर्वनामस्थानत्वेन भत्वात् 'भस्य टेर्लोपः' इति टेः ( इनः ) लोपः । (३-४) जश्शसोः शिभावे तस्य सर्वनामस्थानत्वात् 'इतोऽत्' इत्यत्वे 'थो न्थः' इति न्थादेशे उपधादीर्घः । (५) टादावचि भत्वात् टेर्लोपः । (६) भ्यामादौ हलि पदत्वात् नलोपः । (७) सुब्लुकि 'सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः' (वा) इति विभाषया नलोपः । नलोपे सति 'हे वारे' इति वदत्रापि गुणस्तु न 'नलोपः सुप्स्वरे'ति नलोपस्याऽसिद्धत्वात् ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | प्रियपञ्चा[1] | प्रियपञ्चानौ | प्रियपञ्चानः[2] | कर्त्ता |
| द्वि० | प्रियपञ्चानम् | प्रियपञ्चानौ | प्रियपञ्चः[3] | कर्म |
| तृ० | प्रियपञ्चा | प्रियपञ्चभ्याम् | प्रियपञ्चभिः | करण |
| च० | प्रियपञ्चे | प्रियपञ्चभ्याम् | प्रियपञ्चभ्यः | सम्प्र० |
| पं० | प्रियपञ्चः | प्रियपञ्चभ्याम् | प्रियपञ्चभ्यः | अपा० |
| ष० | प्रियपञ्चः | प्रियपञ्चोः | प्रियपञ्चाम् | सम्ब० |
| स० | प्रियपञ्चि | प्रियपञ्चोः | प्रियपञ्चसु | अधि० |
| | हे प्रियपञ्चन् | हे प्रियपञ्चानौ | हे प्रियपञ्चानः | सम्बो० |

[२२२] नकारान्त–पुंल्लिङ्गः 'प्रियाष्टन्' शब्दः

( ८ ठो प्रिय है जिसको ऐसा पुरुष )

| | | | | |
|---|---|---|---|---|
| प्र० | प्रियाष्टाः[4] / प्रियाष्टा | प्रियाष्टानौ[5] | प्रियाष्टानः | कर्ता |

---

(१) प्रियाः पञ्च यस्येति बहुव्रीहौ अन्यपदार्थप्रधानत्वात् एक–द्वि–बहुवचनानि सन्ति । सुटि हलादौ च राजवत् । (२) 'षड्भ्यो लुगि'ति जश्शसोर्न लुक्, एवमामि 'षट्चतुर्भ्यश्चे'ति नुडपि न उभयसूत्रे बहुवचननिर्देशेन षट्चतुरर्थप्राधान्यावगमात् । (३) शसादावचि भत्वादल्लोपे नस्य श्चुत्वेन ञकारे सति ञकारद्वयमध्ये चकारः इति बोध्यम् । (४) प्रियाः अष्टौ यस्येति बहुव्रीहौ अन्यपदार्थप्रधानत्वात् एक–द्वि–बहु–वचनानि भवन्ति । सौ हलि आत्वे रुत्वविसर्गौ । आत्वाभावे राजवत् (५) अष्टाभ्यः इति कृतात्वनिर्देशेन जश्शसोरनुमीयमानमात्वं प्राधान्ये सत्येव भवति नतूपसर्जनत्वेऽपि ( गौणत्वेऽपि ) अष्टाभ्यः इति बहुवचननिर्देशात्, अन्यथा कृतात्वाऽनुकरणेऽपि एकवचनेनैव निर्दिशेत्–'अष्टा औश्' इति 'अष्ट औश्'इति वा, तेन प्रियाष्टन् शब्दस्य हलादावेव वैकल्पिकमात्वमित्यवधेयम् । 'अष्टन आ विभक्तौ' इत्यत्र 'अष्टनः' इत्येकवचननिर्देशेन अष्टन्शब्दार्थस्य प्राधान्याश्रयणे मानाभावादिति भावः । गौणमुख्यन्यायस्तु नात्र प्रवर्तते, एवं सत्यपि 'अष्टाभ्यः औश्' इत्यत्र बहुवचनवैयर्थ्यात् । तथा च—"प्रियाष्टनो राजवत् सर्व

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| द्वि० | प्रियाष्टानम् | प्रियाष्टानौ | प्रियाष्ट्नः[1] | कर्म |
| तृ० | प्रियाष्ट्ना | प्रियाष्टाभ्याम् / प्रियाष्टभ्याम् | प्रियाष्टाभिः / प्रियाष्टभिः | करण |
| च० | प्रियाष्ट्ने | प्रियाष्टाभ्याम् / प्रियाष्टभ्याम् | प्रियाष्टाभ्यः / प्रियाष्टभ्यः | सम्प्र |
| पं० | प्रियाष्ट्नः | प्रियाष्टाभ्याम् / प्रियाष्टभ्याम् | प्रियाष्टाभ्यः / प्रियाष्टभ्यः | अपा |
| ष० | प्रियाष्ट्नः | प्रियाष्ट्नोः | प्रियाष्ट्नाम् | सम्ब |
| स० | प्रियाष्ट्नि / प्रियाष्टनि | प्रियाष्ट्नोः | प्रियाष्टासु / प्रियाष्टसु | अधि |
| | हे प्रियाष्टाः / हे प्रियाष्टा | हे प्रियाष्टानौ | हे प्रियाष्टानः | सम्बो |

[२२३] त्रिषु लिङ्गेषु समानो नकारान्त 'पञ्चन्' शब्दो नित्यं बहुवचना

प्र०-पञ्च[2] द्वि०-पञ्च[3] तृ०-पञ्चभिः[4] च०-पञ्चभ्यः
पं०-पञ्चभ्यः ष०-पञ्चानाम्[5] स०-पञ्चसु सम्बो०-हे पञ्च

[२२४] त्रिषु लिङ्गेषु समानः षकारान्त 'षट्'शब्दो नित्यं बहुवचनान

---

हाहावच्चाऽपरं हलि' अर्थात् प्रियाष्टन् शब्दस्याजादिषु राजवदेव सर्वं रूपम् हलादिषु तु हाहाशब्दवदिति, चकारात् राजवदपीति तत्तु आत्वाभावे द्रष्टव्यम्
(१) अत्राल्लोपे सति ष्टुत्वन्तु न पूर्वस्माद्विधिः पूर्वविधिः, इति पञ्चमीसम सपक्षे 'अचः परस्मिन्नि'ति अल्लोपस्य स्थानिवत्वात् । 'पूर्वत्रासिद्धीये न स्थानिवत्' इति निषेधस्तु न शङ्क्यः, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इत्युक्तत्वात् । किञ्च कार्यकालपक्षे 'अन्तरङ्ग'परिभाषायाः षष्ठाध्यायीस्थत्वाभावे अन्तरङ्गे ष्टुत्वे कर्तव्ये बहिरङ्गस्याल्लोपस्य असिद्धत्वाच्च । (२-३) 'ष्णान्ता षट्' इति षट्संज्ञायां 'षड्भ्यो लुक्' इति जश्शसोर्लुकि नलोपः । (४) भिसादौ हलि पदत्वान्नलोपः । (५) षट्त्वे 'षट्चतुर्भ्यश्च' इति नुटि 'नामी'ति दीर्घस्याऽप्राप्तया नलोपे प्राप्ते तस्याऽसिद्धत्वात् 'नोपधायाः' इति पूर्वं दीर्घे ततो नलोपः ।

०-षट्[1] द्वि०-षट् तृ०-षड्भिः च०-षड्भ्यः
०-षड्भ्यः ष०-षण्णाम्[2] स०-षट्सु सम्बो०-हे षट्

२२५] त्रिषु लिङ्गेषु समानो नकारान्तः 'सप्तन्'शब्दो नित्यं बहुवचनान्तः
०-सप्त[3] द्वि०-सप्त तृ०-सप्तभिः च०-सप्तभ्यः
०-सप्तभ्यः ष०-सप्तानाम् स०-सप्तसु सम्बो०-हे सप्त

२२६] त्रिषु लिङ्गेषु समानो नकारान्त 'अष्टन्'शब्दो नित्यं बहुवचनान्तः
०-अष्टौ[4] द्वि०-अष्टौ तृ०-अष्टाभिः च०-अष्टाभ्यः
०-अष्टाभ्यः ष०-अष्टानाम् स०-अष्टासु सम्बो०-हे अष्टौ

[२२७] 'अष्टन आ विभक्तौ' इत्यात्वाभावे 'अष्टन्' शब्दः ।
०-अष्ट[5] द्वि०-अष्ट तृ०-अष्टभिः च०-अष्टभ्यः
०-अष्टभ्यः ष०-अष्टानाम् स०-अष्टसु सम्बो-हे अष्ट

[२२८] नकारान्तस्त्रिषु लिङ्गेषु समानो 'नवन्' शब्दः ।
०-नव[6] द्वि०-नव तृ०-नवभिः च०-नवभ्यः

---

(१) षष् शब्दोऽपि प्रसङ्गादत्रैव लिख्यते, षान्तत्वात् षट्संज्ञायां जश्शसोर्लुकि जश्त्वचर्त्वे । (२) 'षट्चतुर्भ्यश्च' इति नुटि ष्टुत्वे 'प्रत्यये भाषायामि'ति वचनान्नित्यमनुनासिकः । अनामिति पर्युदासान्न ष्टुत्वनिषेधः । (३) पञ्चन् शब्दवत् कार्यं ज्ञेयम् । (४) अष्टन आ विभक्तौ' इत्यात्वे 'अष्टाभ्य औश्' इत्यौशि वृद्धिः । ननु हलादौ विहितस्यात्वस्य कथं जश्शसोः प्रवृत्तिरिति चेत्सत्यम्, 'अष्टभिः' इत्यत्रोदात्तत्ववारणाय दीर्घान्तादष्टनः परस्याऽसर्वनामस्थानविभक्तिरुदात्तास्यादित्यर्थक 'अष्टनो दीर्घात्' इति सूत्रस्थ दीर्घग्रहणसामर्थ्यात् आत्वस्य वैकल्पिकत्वेन भ्यसि 'अष्टाभ्यः' 'अष्टभ्यः' इति रूपद्वयसत्यपि औश्विधौ लाघवात् अष्टभ्यः इति वक्तव्ये अष्टाभ्यः इति कृतात्वनिर्देशात् जश्शसोर्विषयेऽपि आत्वं भवतीति ज्ञापनस्य जागरूकत्वादिति दिक् । (५) आत्वाऽभावे पञ्चन् शब्दवत् सर्वं कार्यं समानं ज्ञेयम् । (६) नवन्शब्दादारभ्य अष्टादशन् शब्दपर्यन्तमपि पञ्चन्शब्दवत् समानं कार्यम्भवतीति न विस्मर्तव्यम् ।

पं०-नवभ्यः ष०-नवानाम् स०-नवसु सम्बो०-हे नव

[२२९] नकारान्तस्त्रिषु लिङ्गेषु समानो 'दशन्' शब्दः ।

प्र०-दश द्वि०-दश तृ०-दशभिः च०-दशभ्यः
पं०-दशभ्यः ष०-दशानाम् स०-दशसु सम्बो०-हे दश

[ २३० ] नकारान्तस्त्रिषु लिङ्गेषु समानः 'एकादशन्' शब्दः ।

प्र०-एकादश द्वि०-एकादश तृ०-एकादशभिः च०-एकादशभ्यः
पं०-एकादशभ्यः ष०-एकादशानाम् स०-एकादशसु हे एकादश

एवं द्वादशन्, त्रयोदशन्, चतुर्दशन्, पञ्चदशन्, सप्तदशन्, अष्टादशन्-शब्दाः त्रिषु लिङ्गेषु समानाः पञ्चन् शब्दवत् ।

[ २३१ ] स्त्रीलिङ्गो 'ऊनविंशति' शब्दः नित्यैकवचनान्तः ( १९ )

प्र०-ऊनविंशतिः द्वि०-ऊनविंशतिम् तृ०-ऊनविंशत्या
च०-{ ऊनविंशत्यै / ऊनविंशतये } पं०-{ ऊनविंशत्याः / ऊनविंशतेः } स०-{ ऊनविंशत्याम् / ऊनविंशतौ }
सम्बो० हे ऊनविंशते

एवं 'विंशति' शब्दोऽपि ( २० )

[ २३२ ] स्त्रीलिङ्गो नित्यैकवचनान्तः 'त्रिंशत्' शब्दः ( ३० )

प्र०-त्रिंशत् द्वि०-त्रिंशतम् तृ०-त्रिंशता च०-त्रिंशते

---

(१) विंशत्यादौ कृतैकशेषे तु द्विवचन-बहुवचनान्तोऽपि भवति, यथा-विंशतिश्च २ इति विंशती' । एवं विंशतिश्च ३ इति विंशतयः', एवमन्यत्रापि ज्ञेयम् । शतञ्च ३ इति 'शतानि' इति तु 'परममूलोक्तं न विस्मर्तव्यम् । एकादि नवान्तपर्यन्तमेकशेषो न भवति अनभिधानात् । एवं प्रचुरप्रयोगाऽभावात् द्वन्द्वाऽभावोऽपि बोध्यम् । "विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः" इत्यमरः । अयम्भावः विंशत्यारभ्य संख्यावाचिनाम् एकवचने एव सदा प्रयुज्यन्ते। विंशत्यादिभिः संख्यासंख्येययोः उभयोर्बोधो भवति । यथा-'विंशतिः छात्त्राः' अत्र विंशतित्वविशिष्टाः छात्त्राः प्रतीयन्ते । 'छात्त्राणां विंशतिः' इत्यत्र तु छात्त्रगतविंशतित्वसंख्या प्रतीयते । एवमन्यत्राप्युह्यम् । साधनप्रकारस्तु मतिवत् ।

पं०-त्रिंशतः  ष०-त्रिंशतः  स०-त्रिंशति  सम्बो०-हे त्रिंशत्

[२३३] स्त्रीलिङ्गो नित्यैकवचनान्तः 'चत्वारिंशत्' शब्दः (४०)

प्र०-चत्वारिंशत्  द्वि०-चत्वारिंशतम्  तृ०-चत्वारिंशता
च०-चत्वारिंशते  पं०-चत्वारिंशतः  ष०-चत्वारिंशतः
स०-चत्वारिंशति  सम्बो०-हे चत्वारिंशत्

[२३४] स्त्रीलिङ्गो नित्यैकवचनान्तः 'पञ्चाशत्' शब्दः (५०)

प्र०-पञ्चाशत्  द्वि०-पञ्चाशतम्  तृ०-पञ्चाशता  च०-पञ्चाशते
पं०-पञ्चाशतः  ष०-पञ्चाशतः  स०-पञ्चाशति  हे पञ्चाशत्

[२३५] स्त्रीलिङ्गो नित्यैकवचनान्तः 'षष्टि' शब्दः (६०)

प्र०-षष्टिः[1]  द्वि०-षष्टिम्  तृ०-षष्ट्या  च०-{ षष्ट्यै / षष्टये }

पं०-{ षष्ट्याः / षष्टेः }  ष०-{ षष्ट्याः / षष्टेः }  स०-{ षष्ट्याम् / षष्टौ }  सम्बो०-हे षष्टे

[२३६] स्त्रीलिङ्गो नित्यैकवचनान्तः 'सप्तति' शब्दः (७०)

प्र०-सप्ततिः[2]  द्वि०-सप्ततिम्  तृ०-सप्तत्या  च० { सप्तत्यै / सप्ततये }

प० { सप्तत्याः / सप्ततेः }  ष० { सप्तत्याः / सप्ततेः }  स० { सप्तत्याम् / सप्ततौ }  सम्बो०-हे सप्तते

[२३७] स्त्रीलिङ्गो नित्यैकवचनान्तः 'अशीति' शब्दः (८०)

प्र०-अशीतिः[3]  द्वि०-अशीतिम्  तृ०-अशीत्या  च०-{ अशीत्यै / अशीतये }

पं०-{ अशीत्याः / अशीतेः }  ष०-{ अशीत्याः / अशीतेः }  स०-{ अशीत्याम् / अशीतौ }  सं०-हे अशीते

[२३८] स्त्रीलिङ्गो नित्यैकवचनान्तो 'नवति' शब्दः (९०)

---

(१) मतिवत् कार्यं बोध्यम् ।  (२) मतिवत् कार्यं भवति ।  (३) मतिवत् कार्यं ज्ञेयम् ।

प्र०-नवतिः द्वि०-नवतिम् तृ०-नवत्या च०-{ नवत्यै / नवतये }

पं०-{ नवत्याः / नवतेः } ष०-{ नवत्याः / नवतेः } स०-{ नवत्याम् / नवतौ } सम्बो०-हे नवते

[ २३९ ] नपुंसकलिङ्गो नित्यैकवचनान्तः 'शत' शब्दः ( १०० )

प्र०-शतम्[2] द्वि०-शतम् तृ०-शतेन च०-शताय

पं०-शतात्-द् ष०-शतस्य स०-शते सम्बो०-हे शत

एवम्-अयुत-लक्ष-नियुत-शब्दाः ज्ञानवत्। कोटि-शब्दः स्त्री लिङ्गत्वात् 'रुचि' वत्।

---

## अथ प्रसङ्गात् संख्यानां गणनाक्रमोऽप्यत्रैव लिख्यते-

| | | |
|---|---|---|
| १=एकम् | ९=नव | १८=अष्टादश[5] |
| २=द्वे | १०=दश | १९ { ऊनविंशतिः / एकोनविंशतिः / एकान्नविंशतिः[6] / एकादूनविंशतिः } |
| ३=त्रीणि | ११=एकादश | २०=विंशतिः |
| ४=चत्वारि | १२=द्वादश[3] | २१=एकविंशति |
| ५=पञ्च | १३=त्रयोदश[4] | २२=द्वाविंशति |
| ६=षट् | १४=चतुर्दश | २३=त्रयोविंशतिः[7] |
| ७=सप्त | १५=पञ्चदश | २४=चतुर्विंशतिः |
| ८ { अष्टौ / अष्ट } | १६=षोडश | |
| | १७=सप्तदश | |

---

(१) इदमपि मतिवत्। (२) ज्ञानवत्। (३,५) 'द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः'=द्विशब्दस्य अष्टन्शब्दस्य च संख्यावाचके उत्तरपदे परे आत् स्यात्, न तु बहुव्रीहौ, अशीतिपरे चेत्यर्थः। बहुव्रीहौ निषेधात्, द्वौ वा त्रयो वेति विग्रहे 'संख्याव्यये'ति बहुव्रीहौ 'द्वित्राः' इत्यत्र आत्वं न भवति। अशीतिपरे आत्वन्नेत्यस्योदाहरणन्तु अनुपदमेव "द्व्यशीतिः" इति वक्ष्यामः। (६) एकेन न विंशतिः इति विग्रहः। 'एकादिश्चैकस्य चादुक्' इति नञः प्रकृतिभावे अदुगागमे च दीर्घे अनुनासिको विकल्पः। (४,७) 'त्रेस्त्रयः'=प्राक्शतात् संख्याशब्दे

२५=पञ्चविंशतिः
२६=षड्विंशतिः
२७=सप्तविंशतिः
२८=अष्टाविंशतिः
२९ { ऊनत्रिंशत् / एकोनाविंशत्
३०=त्रिंशत्
३१=एकत्रिंशत्
३२=द्वात्रिंशत्
३३=त्रयस्त्रिंशत्
३४=चतुस्त्रिंशत्
३५=पञ्चत्रिंशत्
३६=षट्त्रिंशत्
३७=सप्तत्रिंशत्
३८=अष्टात्रिंशत्
३९ { ऊनचत्वारिंशत् / एकोनचत्वारिं०
४०=चत्वारिंशत्
४१=एकचत्वारिंशत्
४२ { द्वाचत्वारिंशत्[1] / द्विचत्वारिंशत्
४३ { त्रयश्चत्वारिंशत्[2] / त्रिचत्वारिंशत्
४४=चतुश्चत्वारिंशत्

४५=पञ्चचत्वारिंशत्
४६=षट्चत्वारिंशत्
४७=सप्तचत्वारिंशत्
४८ { अष्टाचत्वारिंशत्[3] / अष्टचत्वारिंशत्
४९ { ऊनपञ्चाशत् / एकोनपञ्चाशत्
५०=पञ्चाशत्
५१=एकपञ्चाशत्
५२ { द्विपञ्चाशत् / द्वापञ्चाशत्
५३ { त्रयःपञ्चाशत् / त्रिपञ्चाशत्
५४=चतुःपञ्चाशत्
५५=पञ्चपञ्चाशत्
५६=षट्पञ्चाशत्
५७=सप्तपञ्चाशत्
५८ { अष्टापञ्चाशत् / अष्टपञ्चाशत्
५९ { ऊनषष्टिः / एकोनषष्टिः
६०=षष्टिः
६१=एकषष्टिः
६२ { द्विषष्टिः / द्वाषष्टिः

६३ { त्रयःषष्टिः / त्रिषष्टिः
६४=चतुःषष्टिः
६५=पञ्चषष्टिः
६६=षट्षष्टिः
६७=सप्तषष्टिः
६८ { अष्टाषष्टिः / अष्टषष्टिः
६९ { ऊनसप्ततिः / एकोनसप्ततिः
७०=सप्ततिः
७१=एकसप्ततिः
७२ { द्विसप्ततिः / द्वासप्ततिः
७३ { त्रयःसप्तति / त्रिसप्ततिः
७४=चतुःसप्ततिः
७५=पञ्चसप्ततिः
७६=षट्सप्ततिः
७७=सप्तसप्ततिः
७८ { अष्टासप्ततिः / अष्टसप्ततिः
७९ { ऊनाशीतिः / एकोनाशीतिः
८०=अशीतिः

---

उत्तर पदेपरतः त्रिशब्दस्य त्रयस् आदेशः स्यात् नतु बहुव्रीहौ, अशीतिपरे चेत्यर्थः एवम् त्रयसादेशो रुत्वे उत्वे च गुणः । (१-३) 'विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्' द्वि-अष्टनः-त्रेश्च प्रागुक्तम् ( द्वि-अष्टनोरात्वं, त्रिशब्दस्य त्रयसादेशश्च ) वा स्यात् चत्वारिंशदादौ परे इत्यर्थः ।

८१ = एकाशीतिः
८२ = द्व्यशीतिः[1]
८३ = त्र्यशीतिः[2]
८४ = चतुरशीतिः
८५ = पञ्चाशीतिः
८६ = षडशीतिः
८७ = सप्ताशीतिः
८८ = अष्टाशीतिः[3]
८९ { ऊननवतिः / एकोननवतिः

९० = नवतिः
९१ = एकनवतिः
९२ { द्वानवतिः / द्विनवतिः
९३ { त्रयोनवतिः / त्रिनवतिः
९४ = चतुर्णवति
९५ = पञ्चनवतिः
९६ = षण्णवतिः
९७ = सप्तनवतिः

९८ { अष्टानवतिः / अष्टनवतिः
९९ { नवनवतिः / ऊनशतम् / एकोनशतम्
१०० = शतम्
१०१ = एकशतम्[4]
१०२ = द्विशतम्[5]
१०३ = त्रिशतम्[6]
इत्यादि।

अथ संख्यायाः कुत्र विश्राम इत्याह—

"एकं दश शतञ्चैव सहस्रमयुतं तथा।
लक्षञ्च नियुतञ्चैव कोटिरर्बुदमेव च॥
वृन्दं खर्वो निखर्वश्च शङ्खः पद्मश्च सागरः।
अन्त्यं मध्यं परार्द्धञ्च दशवृद्ध्या यथाक्रमम्[7]॥" इति।

---

(१-३) 'द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः' इति सूत्रे, 'त्रेस्त्रयः' इति सूत्रे च नतु अशीतावित्युक्तत्वात् द्व्यष्टनशब्दयोरात्वं, त्रिशब्दस्य त्रयसादेशश्चाऽत्र न भवतीत्यवधेयम्। (४) एकञ्च शतञ्चेति समाहारद्वन्द्वः। (५-६) द्वौ च शतञ्च, त्रीणि च शतं च इति समाहारद्वन्द्वः। 'द्व्यष्टनः' इति सूत्रे 'त्रेस्त्रयः' इति सूत्रे च 'प्राक् शतादिति वक्तव्यम्' ( वा० ) इत्युक्तत्वात् शतशब्दे परे द्विशब्दस्य आत्वं, त्रिशब्दस्य त्रयसादेशो न भवतीति। कर्मधारये तु 'द्विशतम्' इत्यस्य २०० 'त्रिशतम्' इत्यस्य ३०० इत्यर्थो भवतीति दिक्। (७) एतत् संख्याक्रमो नेदानीं व्यवहारे दृश्यते।

| | | |
|---|---|---|
| एकम् = इकाई | .... | १ |
| दश = दहाई | .... | १० |
| शतम् = सैकड़ा | .... | १०० |
| सहस्रम् = हज़ार | .... | १००० |
| दशसहस्रम् = दश हज़ार | .... | १०००० |
| लक्षम् = लाख | .... | १००००० |
| दशलक्षम् = दश लाख | .... | १०००००० |
| कोटिः = कड़ोर | .... | १००००००० |
| दशकोटिः = दश कड़ोर | .... | १०००००००० |
| अर्बुदम् = अरब | .... | १००००००००० |
| दशार्बुदम् = दश अरब | .... | १०००००००००० |
| खर्वः = खरब | .... | १००००००००००० |
| दशखर्वः = दश खरब | .... | १०००००००००००० |
| नीलम् = नील | .... | १००००००००००००० |
| दशनीलम् = दश नील | .... | १०००००००००००००० |
| पद्मम् = पद्म | .... | १००००००००००००००० |
| दशपद्मम् = दश पद्म | .... | १०००००००००००००००० |
| शंखः = शंख | .... | १००००००००००००००००० |
| महाशंखः = दश शंख | .... | १०००००००००००००००००० |

## अथ च प्रकृतमनुसरामः—

[२४०] धकारान्त-पुंल्लिङ्गो 'बुध्' शब्दः ( समझदार )

| | | | | |
|---|---|---|---|---|
| प्र० | भुत्-भुद् | बुधौ | बुधः | कर्ता |
| द्वि० | बुधम् | बुधौ | बुधः | कर्म |
| तृ० | बुधा | भुद्भ्याम् | भुद्भिः | करण |

(१) बुध्यते इति भुत् । 'बुध अवगमने' तस्मात् कर्तरि क्विप् । 'एकाचो-बशः' इति बकारस्य भषभावे जश्त्वचर्त्वयोः सुलोपः । (२) पदान्तत्वाऽभावात् न भषभावः । (३) भ्यामादौ हलि 'स्वादिष्विति' पदत्वात् भषभावे जश्त्वम् ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| च० | बुधे | भुद्भ्याम् | भुद्भ्यः | सम्प्र० |
| पं० | बुधः | भुद्भ्याम् | भुद्भ्यः | अपा० |
| ष० | बुधः | बुधोः | बुधाम् | सम्ब० |
| स० | बुधि | बुधोः | भुत्सु | अधि० |
| | हे भुत्-भुद् | हे बुधौ | हे बुधः | सम्बो० |

[२४१] जान्त-पुँल्लिङ्गो 'युज्' शब्दः ( योगी )

| | | | | |
|---|---|---|---|---|
| प्र० | युङ् | युञ्जौ | युञ्जः | कर्ता |
| द्वि० | युञ्जम् | युञ्जौ | युञ्जः | कर्म |
| तृ० | युजा | युग्भ्याम् | युग्भिः | करण |
| च० | युजे | युग्भ्याम् | युग्भ्यः | सम्प्र० |
| पं० | युजः | युग्भ्याम् | युग्भ्यः | अपा० |

---

(१) युनक्तीति युङ्। 'युजिर् योगे' तस्मात् 'ऋत्विगि'त्यादिसूत्रेण क्विन्। 'ऋत्युगि'ति सूत्रेण अलाक्षणिकम् (लक्षणानि=सूत्राणि, तैः प्रतिपादितं कार्यं लाक्षणिकं तद्भिन्नमित्यर्थः) अपि किञ्चित् कार्यं निपातनात् भवति, तद्यथा–ऋतौ उपपदे यज्धातोः क्विन्, 'वचिस्वपी'ति सम्प्रसारणं 'व्रश्चे'ति षत्वाऽपवादकुत्वञ्च। कृषेः क्विन्, द्वित्वम्, अन्तोदात्तत्वं च। सृजेः कर्मणि क्विन्, अमागमश्च, दिशेः कर्मणि क्विन्। उत्पूर्वात् स्निहेः क्विन्, उदो दलोपः, षत्वञ्च। अञ्जेः सुप्युपपदेः क्विन् युजेः केवलात् क्विन्। क्रुञ्चेः केवलात् क्विन्। इत्यादिकं न विस्मर्तव्यम्, पुनरग्रे एतत्प्रतिपादनाऽसम्भवादित्यास्तान्तावत्। प्रकृते क्विनि 'लशक्वे'ति ककारस्य, इकारस्योच्चारणार्थत्वेन 'हलन्त्यमि'ति नकारस्य 'वेरपृक्तस्ये'ति वकारस्य च इत्संज्ञायां लोपे च, क्विनः सर्वाऽपहारः इति तत्त्वम्। एवंचाऽन्यत्राप्युह्यम्। ततः सौ 'युजेरसमासे' इति नुमि सुलोपे संयोगान्तलोपे च 'क्विन्प्रत्ययस्ये'ति नकारस्य कुत्वेन ङकारः। युञ्जावित्यत्र अनुस्वारे परसवर्णे च कृते ञकारस्य कुत्वन्तु न परसवर्णस्याऽसिद्धत्वात्। शसादावचि असर्वनामस्थानत्वान्न नुम्। हलि तु पदत्वात् कुत्वं सुपि षत्वञ्चेति विशेषः।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| ष० | युजः | युजोः | युजाम् | सम्ब० |
| स० | युजि | युजोः | युक्षु | अधि० |
| | हे युङ् | हे युञ्जौ | हे युञ्जः | सम्बो० |

[२४२] जान्त-पुंल्लिङ्गः 'सुयुज्' शब्दः ( सुयोगी )

| | | | | |
|---|---|---|---|---|
| प्र० | सुयुक्[1]-ग् | सुयुजौ | सुयुजः | कर्ता |
| द्वि० | सुयुजम् | सुयुजौ | सुयुजः | कर्म |
| तृ० | सुयुजा | सुयुग्भ्याम् | सुयुग्भिः | करण |
| च० | सुयुजे | सुयुग्भ्याम् | सुयुग्भ्यः | सम्प्र० |
| पं० | सुयुजः | सुयुग्भ्याम् | सुयुग्भ्यः | अपा० |
| ष० | सुयुजः | सुयुजोः | सुयुजाम् | सम्ब० |
| स० | सुयुजि | सुयुजोः | सुयुक्षु | अधि० |
| | हे सुयुक्-ग् | हे सुयुजौ | हे सुयुजः | सम्बो० |

[२४३] जकारान्त–पुंल्लिङ्गो 'खञ्ज्' शब्दः ( लंगड़ा, खोंड़ा )

| | | | | |
|---|---|---|---|---|
| प्र० | खन्[2] | खञ्जौ[3] | खञ्जः | कर्ता |
| द्वि० | खञ्जम् | खञ्जौ | खञ्जः | कर्म |
| तृ० | खञ्जा | खन्भ्याम्[4] | खन्भिः | करण |
| च० | खञ्जे | खन्भ्याम् | खन्भ्यः | सम्प्र० |
| पं० | खञ्जः | खन्भ्याम् | खन्भ्यः | अपा० |
| ष० | खञ्जः | खञ्जोः | खञ्जाम् | सम्ब० |
| स० | खञ्जि | खञ्जोः | खन्त्सु[5]-खन्सु | अधि० |
| | हे खन् | हे खञ्जौ | हे खञ्जः | सम्बो० |

---

(१) सुष्ठु युनक्तीति सुयुक् । 'सत्सुद्विषे'ति क्विप् । असमासे इत्युक्तत्वान्न नुम् । (२) खञ्जतीति खन् । 'खजि गति वैकल्ये' अस्मात् क्विप्, इदित्वान्नुम्, अनुस्वारपरसवर्णौ । नुलोपे सति संयोगान्तलोपे निमित्ताऽपायात् अनुस्वारपरसवर्णयोर्निवृत्तिः । (३) अजादौ पदत्वाऽभावात् संयोगान्तलोपो न । (४) भ्यामादौ हलि 'स्वादिष्वि'ति पदत्वात् संयोगान्तलोपः । (५) 'नश्चे'ति विभाषया तुगि-

## [ २४४ ] अकारान्त-पुंल्लिङ्गो 'राज्' शब्दः ( राजा )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | राट्[1]-राड् | राजौ | राजः | कर्ता |
| द्वि० | राजम् | राजौ | राजः | कर्म |
| तृ० | राजा | राड्भ्याम्[2] | राड्भिः | करण |
| च० | राज्ञे | राड्भ्याम् | राड्भ्यः | सम्प्र० |
| पं० | राजः | राड्भ्याम् | राड्भ्यः | अपा० |
| ष० | राजः | राजोः | राजाम् | सम्ब० |
| स० | राजि | राजोः | राट्त्सु[3]-राट्सु | अधि० |
| | हे राट्-राड् | हे राजौ | हे राजः | सम्बो० |

## [ २४५ ] जकारान्त-पुंल्लिङ्गो विभ्राज्' शब्दः

( क्षत्रिय, सर्वव्यापी पुरुष-परमेश्वर )

| | | | | |
|---|---|---|---|---|
| प्र० | विभ्राट्[4]-ड् | विभ्राजौ | विभ्राजः | कर्ता |
| द्वि० | विभ्राजम् | विभ्राजौ | विभ्राजः | कर्म |
| तृ० | विभ्राजा | विभ्राड्भ्याम् | विभ्राड्भिः | करण |
| च० | विभ्राजे | विभ्राड्भ्याम् | विभ्राड्भ्यः | सम्प्र० |
| पं० | विभ्राजः | विभ्राड्भ्याम् | विभ्राड्भ्यः | अपा० |
| ष० | विभ्राजः | विभ्राजोः | विभ्राजाम् | सम्ब० |

---

ति विशेषः । (१) राजते इति राट् । 'राजृ दीप्तौ' अस्मात् क्विप् हल्ङ्यादिना सुलोपे 'व्रश्च-भ्रस्ज-सृज-मृज-यज-राज-भ्राज-छशां षः' इति षत्वे जश्त्वचर्त्वे । (२) भ्यामादौ हलि पदत्वात् षत्वं जश्त्वञ्च । (३) 'डः सि धुट्' इति धुट् विकल्पो विशेषः । (४) विशेषेण भ्राजते इति विभ्राट् । 'टु भ्राजृ दीप्तौ' फणादिरयम् तेन क्विपि सुलोपे च सति 'व्रश्चे'ति सूत्रे राजिसाहचर्यात् फणादेरेव भ्राजतेर्ग्रहणात् षत्वम् । शेषं तु राज्वत् । फणादिव्यतिरिक्तानान्तु कुत्वं स्यादत एवोक्तं परममूले-विभ्राक् विभ्राग् इत्यादि ।

| एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|
| विभ्राजि | विभ्राजोः | विभ्राट्त्सु / विभ्राट्सु | अधि० |
| हे विभ्राट्-ड् | हे विभ्राजौ | हे विभ्राजः | सम्बो० |

[२४६] जान्त-पुंलिङ्गो 'देवेज्' शब्दः ( पुजारी जी )

| | | | |
|---|---|---|---|
| देवेट्[1]-ड् | देवेजौ | देवेजः | कर्त्ता |
| देवेजम् | देवेजौ | देवेजः | कर्म |
| देवेजा | देवेड्भ्याम् | देवेड्भिः | करण |
| देवेजे | देवेड्भ्याम् | देवेड्भ्यः | सम्प्र० |
| देवेजः | देवेड्भ्याम् | देवेड्भ्यः | अपा० |
| देवेजः | देवेजोः | देवेजाम् | सम्ब० |
| देवेजि | देवेजोः | देवेट्त्सु / देवेट्सु | अधि० |
| हे देवेट्-ड् | हे देवेजौ | हे देवेजः | सम्बो० |

[२४७] जान्त-पुंलिङ्गो 'विश्वसृज्' शब्दः ( ब्रह्मा )

| | | | |
|---|---|---|---|
| विश्वसृट्[2]-ड् | विश्वसृजौ | विश्वसृजः | कर्त्ता |
| विश्वसृजम् | विश्वसृजौ | विश्वसृजः | कर्म |
| विश्वसृजा | विश्वसृड्भ्याम् | विश्वसृड्भिः | करण |
| विश्वसृजे | विश्वसृड्भ्याम् | विश्वसृड्भ्यः | सम्प्र० |
| विश्वसृजः | विश्वसृड्भ्याम् | विश्वसृड्भ्यः | अपा० |
| विश्वसृजः | विश्वसृजोः | विश्वसृजाम् | सम्ब० |
| विश्वसृजि | विश्वसृजोः | विश्वसृट्त्सु / विश्वसृट्सु | अधि० |
| हे विश्वसृट्-ड् | हे विश्वसृजौ | हे विश्वसृजः | सम्बो० |

(१) देवान् यजतीति देवेट्। क्विपि यजादित्वात् 'वचिस्वपी'ति सम्प्रसारणे ाद् गुणः'। षत्वादिकार्यन्तु राज्वत्। (२) विश्वं सृजतीति विश्वसृट्। ज विसर्गे' अस्मात् क्विप्। षत्वादिकार्यं राज्वत्।

[२४८] जान्त-पुंल्लिङ्गो 'परिमृज्' शब्दः ( सफा करने वाला )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | परिमृट्[1]-ड् | परिमृजौ | परिमृजः | कर्ता |
| द्वि० | परिमृजम् | परिमृजौ | परिमृजः | कर्म |
| तृ० | परिमृजा | परिमृड्भ्याम् | परिमृड्भिः | करण |
| च० | परिमृजे | परिमृड्भ्याम् | परिमृड्भ्यः | सम्प्र० |
| पं० | परिमृजः | परिमृड्भ्याम् | परिमृड्भ्यः | अपा० |
| ष० | परिमृजः | परिमृजोः | परिमृजाम् | सम्ब० |
| स० | परिमृजि | परिमृजोः | परिमृट्त्सु / परिमृट्सु | अधि० |
| | हे परिमृट्-ड् | हे परिमृजौ | हे परिमृजः | सम्बो० |

[२४९] जान्त-पुंल्लिङ्गः 'परिव्राज्' शब्दः ( यति, सन्यासी )

| | | | | |
|---|---|---|---|---|
| प्र० | परिव्राट्[2]-ड् | परिव्राजौ | परिव्राजः | कर्ता |
| द्वि० | परिव्राजम् | परिव्राजौ | परिव्राजः | कर्म |
| तृ० | परिव्राजा | परिव्राड्[3]भ्याम् | परिव्राड्भिः | करण |
| च० | परिव्राजे | परिव्राड्भ्याम् | परिव्राड्भ्यः | सम्प्र० |
| पं० | परिव्राजः | परिव्राड्भ्याम् | परिव्राड्भ्यः | अपा० |
| ष० | परिव्राजः | परिव्राजोः | परिव्राजाम् | सम्ब० |
| स० | परिव्राजि | परिव्राजोः | परिव्राट्[4]त्सु / परिव्राट्सु | अधि० |

(१) परिमार्ष्टीति परिमृट् 'मृजू शुद्धौ' अस्मात् क्विप्, 'क्ङिति चे'ति निषेधात् 'मृजेर्वृद्धिः' इति वृद्धिर्न भवति। षत्वादिकार्यन्तु राजवत्। (२) सर्वं परित्यज्य व्रजतीति परि व्राट्। 'परौ व्रजेः षः पदान्ते' इत्युणादिसूत्रेण परावुपपदेः व्रजेः क्विप् दीर्घः पदान्ते षत्वं च निपात्यते, ततः सौ हल्परत्वात्तस्य लोपे जश्त्वचर्त्वे। (३) भ्यामादौ हलि पदत्वात् षत्वे जश्त्वम्। (४) 'ङः सि धुट्' इति वा धुडिति विशेषः।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| | हे परिव्राट्-ड् | हे परिव्राजौ | हे परिव्राजः | सम्बो० |

एवं सम्राज् ( राजाधिराज ), देवराज् (इन्द्र), विराज् क्षत्रिय परमेश्वर ) इत्यादि

[२५०] जान्त-पुंल्लिङ्गो 'विश्वराज्' शब्दः (दुनियां का राजा भगवान्)

| | | | | |
|---|---|---|---|---|
| प्र० | विश्वाराट्-ड् | विश्वराजौ | विश्वराजः | कर्त्ता |
| द्वि० | विश्वाराजम् | विश्वराजौ | विश्वराजः | कर्म |
| तृ० | विश्वराजा | विश्वाराड्भ्याम् | विश्वाराड्भिः | करण |
| च० | विश्वराजे | विश्वाराड्भ्याम् | विश्वाराड्भ्यः | सम्प्र० |
| पं० | विश्वराजः | विश्वाराड्भ्याम् | विश्वाराड्भ्यः | अपा० |
| ष० | विश्वराजः | विश्वराजोः | विश्वराजाम् | सम्ब० |
| स० | विश्वराजि | विश्वराजोः | { विश्वाराट्त्सु<br>{ विश्वाराट्सु | अधि० |
| | हेविश्वाराट्-ड् | हेविश्वराजौ | हे विश्वराजः | सम्बो० |

[ २५१ ] जान्त–पुंल्लिङ्गो 'भृस्ज्' शब्दः ( भूजा भूजने वाला )

| | | | | |
|---|---|---|---|---|
| प्र० | भृट्-ड् | भृज्जौ | भृज्जः | कर्त्ता |
| द्वि० | भृज्जम् | भृज्जौ | भृज्जः | कर्म |
| तृ० | भृज्जा | भृड्भ्याम् | भृड्भिः | करण |

---

(१) विश्वस्मिन् राजते इति विभ्राट् । 'सत्सूद्विषे'ति क्विपि उपपदसमासे 'विश्वराज्' शब्दः । तस्मात्सौ हल्परत्वात्तस्य लोपे 'व्रश्चे'ति षत्वे जश्त्वे चर्त्वे च 'विश्वस्य वसुराटोः' इति दीर्घः । 'राट्' इति चर्त्वनिर्देशस्य पदान्तत्वोपलक्षणत्वात् जश्त्वपक्षेऽपि दीर्घः । एवं भ्यामादौ हल्यपि बोध्यम् ।(२) 'ङः सि धुट्' इति विशेषः । (३) भृज्जतीति भृट् । 'भ्रस्ज पाके' अस्मात् क्विपि 'ग्रहिज्ये'ति सम्प्रसारणे पूर्वरूपे 'भृस्ज्' शब्दः । तस्मात् सौ हल्परत्वात्तस्य लोपे 'स्कोरि'ति सलोपे च व्रश्चे'ति षत्वे जश्त्वचर्त्वे । (४) निमित्ताभावात् 'स्कोरि'त्यस्याप्राप्त्या 'झलां जश् झशि' इति प्रबाध्य श्चुत्वम् । (५) भ्यामादौ हलि तु पदत्वात् सलोपे षत्वे जत्वम् ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| च० | भृज्जे | भृड्भ्याम् | भृड्भ्यः | सम्प्र० |
| पं० | भृज्जः | भृड्भ्याम् | भृड्भ्यः | अपा० |
| ष० | भृज्जः | भृज्जोः | भृज्जाम् | सम्ब० |
| स० | भृज्जि | भृज्जोः | भृट्त्सु-भृट्सु | अधि० |
| | हे भृट्-ड् | हे भृज्जौ | हे भृज्जः | सम्बो० |

[ २५२ ] जान्त–पुंल्लिङ्गः 'ऋत्विज्' शब्दः ( पुरोहित )

| | | | | |
|---|---|---|---|---|
| प्र० | ऋत्विक्-ग्(१) | ऋत्विजौ | ऋत्विजः | कर्ता |
| द्वि० | ऋत्विजम् | ऋत्विजौ | ऋत्विजः | कर्म |
| तृ० | ऋत्विजा | ऋत्विग्भ्याम्(३) | ऋत्विग्भिः | करण |
| च० | ऋत्विजे | ऋत्विग्भ्याम् | ऋत्विग्भ्यः | सम्प्र० |
| पं० | ऋत्विजः | ऋत्विग्भ्याम् | ऋत्विग्भ्यः | अपा० |
| ष० | ऋत्विजः | ऋत्विजोः | ऋत्विजाम् | सम्ब० |
| स० | ऋत्विजि | ऋत्विजोः | ऋत्विक्षु(४) | अधि० |
| | हे ऋत्विक्-ग् | हे ऋत्विजौ | हे ऋत्विजः | सम्बो० |

एवं बलिभुज् ( काक ), हुतभुग् ( अग्नि ), भृतिभुज् ( भृत्य–नौकर ), भूभुज् ( राजा ), भिषज् ( वैद्य ) इत्यादयो जान्ताः।

[२५३] जान्त–पुंल्लिङ्गः 'ऊर्ज' शब्दः ( बलवान् )

---

(१) गुविति विशेषः। (२) 'ऋ गतौ' अस्मात् औणादिकसूत्रेण तुः। ऋतुः= गमनं, प्राप्तिः, दक्षिणाद्रव्यलाभो विवक्षितः। तस्मिन्निमित्ते यजन्ति =यज्ञव्यापारं कुर्वन्तीत्यर्थे ऋतावुपपदे यज् धातोः क्विनि, 'वचिस्वपी'ति सम्प्रसारणे पूर्वरूपे यणि 'ऋत्विज्' शब्दः। तस्मात् सौ हल्ङ्यादिलोपे 'व्रश्चे'ति षत्वं प्रबाध्य 'क्विन्प्रत्ययस्ये'ति कुत्वे चर्त्वम्। (३) भ्यामादौ हलि पदत्वात् षत्वे जश्त्वम्। (४) सुपि तु खर्परत्वेन चर्त्वे 'आदेशः प्रत्यययोः' इति षत्वमिति विशेषः।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | [1]ऊर्क्-ग् | ऊर्जौ | ऊर्जः | कर्त्ता |
| द्वि० | ऊर्जम् | ऊर्जौ | ऊर्जः | कर्म |
| तृ० | ऊर्जा | [2]ऊर्ग्भ्याम् | ऊर्ग्भिः | करण |
| च० | ऊर्जे | ऊर्ग्भ्याम् | ऊर्ग्भ्यः | सम्प्र० |
| पं० | ऊर्जः | ऊर्ग्भ्याम् | ऊर्ग्भ्यः | अपा० |
| ष० | ऊर्जः | ऊर्जोः | ऊर्जाम् | सम्ब० |
| स० | ऊर्जि | ऊर्जोः | ऊर्क्षु | अधि० |
| | हे ऊर्क्-ग् | हे ऊर्जौ | हे ऊर्जः | सम्बो० |

[२५४] दकारान्त–पुंल्लिङ्गः सर्वनाम 'त्यद्' शब्दः (वह)

| | | | | |
|---|---|---|---|---|
| प्र० | [3]स्यः | [4]त्यौ | [5]त्ये | कर्ता |
| द्वि० | त्यम् | त्यौ | त्यान् | कर्म |
| तृ० | त्येन | त्याभ्याम् | त्यैः | करण |
| च० | त्यस्मै | त्याभ्याम् | त्येभ्यः | सम्प्र० |
| पं० | त्यस्मात्-द् | त्याभ्याम् | त्येभ्यः | अपा० |
| ष० | त्यस्य | त्ययोः | त्येषाम् | सम्ब० |
| स० | त्यस्मिन् | त्ययोः | त्येषु | अधि० |

( त्यदादेः सम्बोधनं नास्ति, प्रचुरप्रयोगाभावात् )

[ २५५ ] दकारान्त–पुंल्लिङ्गः सर्वनाम 'तद्' शब्दः ( वह )

| | | | | |
|---|---|---|---|---|
| प्र० | [6]सः | तौ | ते | कर्ता |

(१) 'ऊर्ज बलप्राणनयोः' अस्मात् चुरादिण्यन्तात् 'भ्राजभासे'त्यादिसूत्रेण क्विपि णिलोपे ऊर्ज् शब्दः। तस्मात् सौ तस्य हल्परत्वात् लोपे 'चोः कुः' कुत्वे चर्त्वम्। 'न पदान्ते'ति निषेधात् कुत्वे कर्त्तव्ये णिलोपस्य स्थानिवत्वन्नेति भावः। (२) भ्यामादौ ऋत्विज्वत् कार्यं बोध्यम्। (३) 'त्यदादीनामः' इत्यत्वे पररूपे 'तदोः सः सावनन्त्ययोः' इति सत्वे रुत्वविसर्गौ। (४) अत्वे पररूपे वृद्धिः, सत्वन्तु न सूत्रे सावित्युक्तेः। (५) 'जसः शी' इति सर्वनामप्रयुक्तकार्यं सर्वशब्दवत् एवमन्यत्राऽप्युह्यम्। (६) 'त्यद्' शब्दवत् कार्यं बोध्यम्।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| द्वि० | तम् | तौ | तान् | कर्म |
| तृ० | तेन | ताभ्याम् | तैः | करण |
| च० | तस्मै | ताभ्याम् | तेभ्यः | सम्प्र० |
| पं० | तस्मात्-द् | ताभ्याम् | तेभ्यः | अपा० |
| ष० | तस्य | तयोः | तेषाम् | सम्ब० |
| स० | तस्मिन् | तयोः | तेषु | अधि० |
| | ० | ० | ० | ० |

एवं परमसः[1] परमतौ परमते इत्यादि।

[ २५६ ] दकारान्त-पुंल्लिङ्गः सर्वनाम 'यद्' शब्दः ( जो )

| | | | | |
|---|---|---|---|---|
| प्र० | सः[2] | यौ | ये | कर्ता |
| द्वि० | यम् | यौ | यान् | कर्म |
| तृ० | येन | याभ्याम् | यैः | करण |
| च० | यस्मै | याभ्याम् | येभ्यः | सम्प्र० |
| पं० | यस्मात्-द् | याभ्याम् | येभ्यः | अपा० |
| ष० | यस्य | ययोः | येषाम् | सम्ब० |
| स० | यस्मिन् | ययोः | येषु | अधि० |
| | ० | ० | ० | ० |

[ २५७ ] दकारान्त--पुंल्लिङ्गः सर्वनाम 'एतद्' शब्दः

( यह-अतिशय समीप में )

| | | | | |
|---|---|---|---|---|
| प्र० | एषः[3] | एतौ | एते | कर्ता |
| द्वि० | एतम् / एनम् | एतौ / एनौ | एतान् / एनान् | कर्म० |

(१) अत्वादीनामाऽऽङ्गत्वात् 'पदाङ्गाधिकारे' इति परिभाषया तदन्तेऽपि प्रवृत्त्या 'त्यत्' शब्दवत् कार्यं ज्ञेयम्। (२) अत्वे पररूपे सर्वशब्दवत् 'त्यद्' शब्देऽपि कार्यं ज्ञेयम्। (३) अत्वे पररूपे 'तदोः सः' इति सत्वे षत्वम्, अन्यत् कार्यं सर्वशब्दवत्। केवलमन्वादेशे 'द्वितीयाटौस्स्वेनः' इति विशेषः।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| तृ० | एतेन / एनेन | एताभ्याम् | एतैः | करण |
| च० | एतस्मै | एताभ्याम् | एतेभ्यः | सम्प्र० |
| पं० | एतस्मात्-द् | एताभ्याम् | एतेभ्यः | अपा० |
| ष० | एतस्य | एतयोः / एनयोः | एतेषाम् | सम्ब० |
| स० | एतस्मिन् | एतयोः / एनयोः | एतेषु | अधि० |

० ० ० ०

[२५८] त्रिषु लिङ्गेषु समानः सर्वनाम 'युष्मद्' शब्दः ( तु, तुम् )

| | | | | |
|---|---|---|---|---|
| प्र० | त्वम्[1] | युवाम्[2] | यूयम्[3] | कर्त्ता |

(१) 'ङे प्रथमयोरम्' इत्यमि 'त्वाहौ सौ' इति मपर्यन्तस्य त्वादेशे 'शेषे लोपः' इति अन्त्यलोपे च । 'अतो गुणे' । अमि पूर्वः । अत्वन्तु न द्विपर्यन्तानामित्युक्तत्वात् । नच स्त्रीत्वविवक्षायां 'त्वं स्त्री' अहं स्त्री' इत्यादौ परमपि 'अमि पूर्वः' इति सूत्रं बाधित्वा अन्तरङ्गत्वाट्टाप् स्यादिति वाच्यम् , "अलिङ्गे युष्मदस्मदो' इति भाष्येण युष्मदस्मच्छब्दस्य लिङ्गाऽभावादिति केचित् । सिद्धान्तिनस्तु—'विवक्षातः कारकाणि भवन्ति' इति सिद्धान्तात् 'शेषे' इत्यत्र स्थानिनः=विधातव्यायां स्थानषष्ठ्यामधिकरणत्वविवक्षया सप्तमीविधानेऽपि शेषस्य स्थाने इत्यर्थलाभेन मपर्यन्ताच्छेषस्य ( 'अद्' इत्यस्य ) लोपः इत्यर्थात् त्वादेशोत्तर मन्तरङ्गत्वात्पररूपे टिलोपे अदन्तत्वाऽभावान्न टाबिति । अत एव "नपुंसकादेशेभ्यो विभक्त्यादेशाः पूर्वविप्रतिषेधेन" इति भाष्यवार्तिकं सङ्गच्छते । युष्मदस्मच्छब्दस्याऽलिङ्गत्वे तु नपुंसकविहितानां शी—शि—लुङ्—नुमादीनामप्राप्त्या तदसङ्गतिः स्पष्टैव । "अलिङ्गे युष्मदस्मदौ" इति भाष्यन्तु—पदान्तरसमभिव्याहारं विना लिङ्गविशेषो युष्मदस्मच्छब्दाभ्यां न प्रतीयते इत्यर्थोऽभिप्रायिकमित्याहुः । (२) अमि 'युवावौ द्विवचने' इति युवादेशे 'प्रथमायाश्चे'ति दकारस्य आत्वे पररूपे दीर्घे पूर्वरूपम् । (३) अमि 'यूयवयौ जसि' इति यूयादेशे पररूपे अदो

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| द्वि० | त्वाम्[1] (त्वा*) | युवाम् (वाम्) | युष्मान्[2] (वः) | कर्म |
| तृ० | त्वया[3] | युवाभ्याम्[4] | युष्माभिः | करण |
| च० | तुभ्यम्[5] (ते) | युवाभ्याम् (वाम्) | युष्मभ्यम्[6] (वः) | सम्प्र० |
| पं० | त्वत्[7] | युवाभ्याम् | युष्मत्[8] | अपा० |
| ष० | तव[9] (ते) | युवयोः[10] (वाम्) | युष्माकम्[11] (वः) | सम्ब० |
| स० | त्वयि[12] | युवयोः | युष्मासु[13] | अधि० |
| | ० | ० | ० | ० |

[२५९] त्रिषु लिङ्गेषु समानः सर्वनाम 'अस्मद्' शब्दः ( मैं, हम )

| | | | | |
|---|---|---|---|---|
| प्र० | अहम्[14] | आवाम् | वयम् | कर्ता |
| द्वि० | माम् (मा*) | आवाम् (नौ) | अस्मान् (नः) | कर्म |

(१) 'त्वमावेकवचने' इति त्वादेशे 'द्वितीयायां च' इत्यात्वे पररूपे दीर्घे पूर्वरूपम्। (२) 'द्वितीयायां च' इत्यात्वे 'शसो नः'। संयोगान्तलोपः। (३) त्वमादेशे 'योऽचि' इति दकारस्य यत्वे पररूपम्। (४) युवादेशे 'युष्मदस्मदोरनादेशे' इति दकारस्यात्वे सवर्णदीर्घः। (५) 'तुभ्यमह्यौ ङयि'। 'ङे प्रथमयोरम्'। 'शेषे लोपः'। (६) 'भ्यसोभ्यम्' इत्यत्र भ्यम्–अभ्यमिति वा छेदः। ततश्च भ्यसः भ्यमादेशे अन्त्यलोपे पररूपम्, अदन्तत्वात् एत्वन्तु न अङ्गवृत्तपरिभाषाविरोधात्। अभ्यमादेशे तु अन्त्यलोपपक्षे झलपरत्वाभावात्, टिलोपपक्षे अदन्तत्वाभावाच्चेत्युभयपक्षेऽपि एत्वस्य प्रवृत्तिर्नेति भावः। (७) त्वादेशे 'एकवचनस्य च' इत्यदादेशे पररूपे टिलोपः। (८) 'पञ्चम्या अत्'। टिलोपः। (९) 'तवममौ ङसि' इति तवादेशे 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यशादेशे पररूपे टिलोपः। (१०) युवादेशे 'योऽचि' इति यत्वे पररूपम्। (११) अस्माकमिति वत (१२) त्वमादेशे यत्वे पररूपम्। (१३) 'युष्मदस्मदोरि'ति आत्वे सवर्णदीर्घः। (१४) युष्मच्छब्दवत्। (*) समानाधिकरणाऽऽमन्त्रितसंज्ञकविशेषणपरकं यत्

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| तृ० | मया | आवाभ्याम् | अस्माभिः | करण |
| च० | मह्यम् (मे) | आवाभ्याम् | अस्मभ्यम् | सम्प्र० |
| पं० | मत् | आवाभ्याम् | अस्मत् | अपा० |
| ष० | मम (मे) | आवयोः (नौ) | अस्माकम् (नः) | सम्ब० |

विशेष्यपदे तदतिरिक्तं यत् सम्बोधनप्रथमान्तं तद् भिन्नपदात् चाक्षुषज्ञानाऽतिरिक्तज्ञानसामान्यार्थक–धातुप्रकृतिक–तिङन्तभिन्न–तिङन्तैकघटितवाक्यस्थात् परयोः समानवाक्यस्थयोः अपादादिस्थयोः श्रूयमाण–षष्ठी–चतुर्थ्येकवचनान्तयोः ते–मे–आदेशौ। श्रूयमाणद्वितीयैकवचनान्तयोश्च त्वा–माऽऽदेशौ। श्रूयमाण–षष्ठी–चतुर्थी–द्वितीया–द्विवचनान्तयोश्च वाम्–नौ–आदेशौ। श्रूयमाण–षष्ठी–चतुर्थी–द्वितीया–बहुवचनान्तयोश्च वस्–नस्–आदेशावित्यते आदेशाः क्रमशो विकल्पात् भवन्ति। च·वा·हा·अह–एव·इत्येतत् पञ्चान्यतमाऽव्ययार्थेन युष्मदस्मदर्थयोः साक्षादसम्बन्धे सति अनन्वादेशे, अन्वादेशे तु नित्यमेव, किन्तु किञ्चित्पदपूर्वकप्रथमान्तपरयोः, समानाधिकरणामन्त्रितसंज्ञकविशेषणपरकबहुवचनान्तपरयोश्च तथाविधयोरन्वादेशेऽपि वा भवन्ति इति 'षष्ठी–चतुर्थी' इत्यादिप्रभृतिद्वादशसूत्राणां सवार्तिकानां निर्गलितोऽर्थः। उदाहरणानि यथा—'श्रीशस्त्वाऽवतु मा पीह' इत्यत्र त्वाम्–माम्–इति, 'दत्तात्ते मेऽपि शर्म सः' इत्यत्र तुभ्यं मह्यम्–इति च, 'स्वामी ते मेऽपि स हरिः' इत्यत्र तव–मम इति च, 'पातु वामपि नौ विभुः' इह युवाम्–आवाम्–इति च, 'सुखं वां नौ ददात्वीशः' इह युवाभ्याम्–आवाभ्याम् इति च, 'पतिर्वामपि नौ विभुः' इह युवयोः–आवयोः इति च, 'सोऽव्याद्वो नः' इह युष्मान्–अस्मानिति च, 'शिवं वो नो दयात्' इह युष्मभ्यम्–अस्मभ्यमिति च, 'सेव्योऽत्र वः सनः' इह युष्माकम्–अस्माकमिति च क्रमशः प्रतिवाक्यं प्राप्नुवन्ति, तेषां स्थाने उक्ता आदेशाः ज्ञेयाः। सूत्रार्थनिविष्टोदाहरणानि विस्तरभिया न लिख्यन्ते इति स्वयमेव परममूले द्रष्टव्यानि। (१) 'साम आकम्' इत्याकमादेशो अन्त्यलोपे च सवर्णदीर्घः। नन्वन्त्यलोपविधाने प्रवर्तमानः सुट्, अन्त्यलोपश्च आकमादेशो सति अनादेशविभक्तिविरहात् 'युष्म-

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| स० | मयि | आवयोः | अस्मासु | अधि० |
| | ० | ० | ० | ० |

[ २५९ ] त्वामतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ताः, वा इति विग्रहे निष्पन्न 'अतियुष्मद्' शब्दः ( तुमको अपनाने वाला-वाले )

| | | | | |
|---|---|---|---|---|
| प्र० | अतित्वम् | अतित्वाम् | अतियूयम् | कर्ता |
| द्वि० | अतित्वाम् | अतित्वाम् | अतित्वान् | कर्म० |

दस्मदोरनादेशे' इति सूत्राऽप्रवृत्तिसहकारेणात्वनिमित्तेतरत्वरूपशेषत्वमादधानः प्रवर्तेत ? आकमादेशश्च सुटि सत्येव साम्त्वसम्पत्त्याऽऽत्मानं कृतार्थयेत्, सुट् चान्त्यलोप एव प्रवृत्तः स्यादिति स्वग्रहसापेक्षग्रहसापेक्षग्रहसापेक्षग्रहविषयत्वरूपचक्रकत्वाऽपातात् कार्याऽप्रवृत्त्या सामोऽभावात् 'साम आकम्' इति सूत्रवैयर्थ्यमिति चेन्न, शब्दाऽनित्यत्वभिया स्थान्यादेशभावस्थले स्थानिवुद्धौ ह्यादेशवुद्धिर्विधीयते इति सिद्धान्तात् प्रकृते आम्वुद्धेः साम्प्रतिकत्वेन, स्थानिघटकसकारविषयकभाविवुद्धिमादायाऽऽकमादेशप्रवृत्तेः । नचाकमादेशेऽन्त्यलोपे च स्थानिवत्त्वेन सामः आम्त्वात् सुट्प्रवृत्तिर्दुर्वारैवेति वाच्यम्, सुट्श्रवणाऽभावायैव स्थानिकोटौ सकारविशेषणेन स्थानिकोटिप्रविष्टाश्रवणस्य स्वभावसिद्धत्वात् । इतरथा ससुट्कनिर्देशवैयर्थ्यापत्तेः । (१) 'त्वमावेकवचने' इति सूत्रघटकैकवचनपदस्य यौगिकत्वेन एकं वक्तीत्येकवचनम् इत्यर्थे सम्पद्यमाने एकत्वसंख्याऽभिधायि 'युष्मद्'-अस्मद्-शब्दयोः यथा यथं त्वमादेशौ भवतः, तथाच युष्मद्-अस्मद्-अर्थगतैकत्वसंख्यामात्रमपेक्षते । तेन समस्ताऽतियुष्मच्छब्दप्रतिपाद्याऽर्थगतद्वित्वादिसंख्यया द्विवचनाद्यानयनेऽपि समस्तपदघटकयुष्मच्छब्दार्थगतैकत्वसंख्यायाः सत्त्वेन एकत्वाऽभिधायियुष्मच्छब्दस्य तद्घटकस्य मपर्यन्तस्य त्वादेशो भवत्येवेति । एवं मामतिक्रान्तः, अतिक्रान्तौ अतिक्रान्ता, वेति विग्रहे निष्पन्नात्यस्मच्छब्देऽप्यूह्यम् । एवञ्च सु-जस्-ङे-ङस्-विभक्तीर्विहाय सर्वासु विभक्तिषु मपर्यन्तस्य अतियुष्मच्छब्दघटकमपर्यन्तयुष्मच्छब्दस्य त्वादेशः, अत्यस्मच्छब्दघटकमपर्यन्ताऽस्मच्छब्दस्य च मादेशो बोध्यः । नच सु-जस्-ङे-ङस्स्वपि त्वमादेशौ कुतो नेति वाच्यम्, 'विप्रतिषेधे' इति सूत्रघटकपरशब्दस्येष्टवाचित्वेन पूर्वेषां त्वाहादीनां त्वमादेशबाधकत्वात् ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प० | अतित्वया | अतित्वाभ्याम् | अतित्वाभिः | करण |
| च० | अतितुभ्यम् | अतित्वाभ्याम् | अतित्वभ्यम् | सम्प्र० |
| पं० | अतित्वत् | अतित्वाभ्याम् | अतित्वत् | अपा० |
| ष० | अतितव | अतित्वयोः | अतित्वाकम् | सम्ब० |
| स० | अतित्वयि | अतित्वयोः | अतित्वासु | अधि० |
| | हे अतित्वम् | हे अतित्वाम् | हे अतियूयम् | सम्बो० |

[२६०] युवाम्, अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ताः, वा इति विग्रहे निष्पन्नः 'अतियुष्मद्' शब्दः (तुम दोनों को अपनाने वाला-वाले)

(१) नन्विह अतियुष्मच्छब्दघटक 'युष्मद्' शब्दस्य उपसर्जनत्वेन सर्वादित्वविरहात् तदन्तस्य सर्वनामत्वाभावेन सर्वनाम्नो विहितस्यैवाऽऽमः सुटो विधानात् प्रकृतेः सुट्सम्भावनाया अपि नितरामनुपलम्भात् कथं 'साम आकम्' इति सूत्रप्रवृत्तिरिति चेन्न, 'अतित्वाकम्' इत्यस्य भाष्यकृता प्रदर्शितत्वेन यत्र सुट् सम्भविता तदर्थं ससुट्कनिर्देशः, यत्र च न भविता तत्र च केवलस्याम आकमादेशस्य ससुट्कनिर्देशेन कल्पनादिति दिक्। (२) अतियुष्मदादिशब्दस्य यत्किञ्चित् व्यक्तिबोधकत्वेन तदर्थस्य प्रवृत्त्यभिमुखीकरणरूपसम्बोधने बाधकाभावात् सम्बोधनेऽपि रूपाणि भवन्तीति भावः। (३) 'युवावौ द्विवचने' इति सूत्रघटक द्विवचनपदस्य यौगिकत्वेन द्वित्वं वक्तीति व्युत्पत्त्या द्वित्वसंख्यामात्रबोधकत्वं 'युष्मद्' अस्मद्' शब्दयोरपेक्षते नतु द्विवचनविभक्तिपरत्वं तथा च–द्वित्वसंख्याभिधायियुष्मदस्मच्छब्दयोर्यथायथं युवावादेशौ भवत इति सूत्रार्थः सम्पद्यते। तेनोक्तविग्रहेण निष्पन्न 'अतियुष्मद्' शब्दस्य एकत्वादिसंख्याविशिष्ट–युष्मत्कर्मकाऽतिक्रमणकर्तृत्वार्थस्य बोधकत्वेऽपि समस्तपदघटकयुष्मच्छब्दस्य द्वित्वसंख्याबोधकत्वेन मपर्यन्तस्य युवादेशो भवत्येव सु–जस्–ङे–ङसितरविभक्तिषु। सु-जस्–ङे–ङस्सु तु परत्वेन युवाऽऽवादेशयो स्त्वादिभिर्बाधः। न च समस्तपदघटकयुष्मच्छब्दस्य वैयाकरणमते गौणार्थबोधकत्वेन मुख्ये एव कार्ये प्रवृत्त्या कथमिहादेश इति वाच्यम्, विभक्तिनिमित्तकत्वेन पदकार्यत्वाभावेन गौणमुख्यन्यायाऽप्रवृत्त्या तथा बोधनाऽसम्भवात् एवम् 'अत्यस्मच्छब्देऽपि सर्वम्बोध्यम्।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | अतित्वम् | अतियुवाम् | अतियूयम् | कर्ता |
| द्वि० | अतियुवाम् | अतियुवाम् | अतियुवान् | कर्म |
| तृ० | अतियुवया | अतियुवाभ्याम् | अतियुवाभिः | करण |
| च० | अतितुभ्यम् | अतियुवाभ्याम् | अतियुवभ्यम् | सम्प्र० |
| पं० | अतियुवत् | अतियुवाभ्याम् | अतियुवत् | अपा० |
| ष० | अतितव | अतियुवयोः | अतियुवाकम् | सम्ब० |
| स० | अतियुवयि | अतियुवयोः | अतियुवासु | अधि० |
| | हे अतित्वम् | हे अतियुवाम् | हे अतियूयम् | सम्बो० |

[२६१] युष्मान् अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ताः वा इति विग्रहे निष्पन्नः 'अतियुष्मद्' शब्दः (तुम सबको अपनाने वाला–वाले)

| | | | | |
|---|---|---|---|---|
| प्र० | अतित्वम् | अतियुष्माम् | अतियूयम् | कर्त्ता |

---

(१) उक्तविग्रहनिष्पन्नातियुष्मच्छब्दस्य सु–जस्–ङे–ङस्सु त्वाद्यादेशाः भवन्ति, यतस्तेषामेकत्व–द्वित्वसंख्यानिबन्धनत्वाभावात्, त्वाद्यादेशौ तु न भवितुं शक्नुतः समस्तपदघटकयुष्मच्छब्दस्य बहुत्वार्थबोधकत्वेन 'त्वमावेकवचने, 'युवावौ द्विवचने' इत्यनयोरप्रवृत्तेः। एवम् 'अत्यस्मद्' शब्देऽपि बोध्यम् । इतिपूर्वोक्तसूत्रद्वयव्याख्यानसरणिमनुसृत्यैवोक्तं परममूले "समस्यमाने" इत्यादिना । तच्छब्दार्थस्तु–समासेच्छयोच्चरितयुष्मदस्मच्छब्दौ यद्येकत्वसंख्यावाचिनौ प्राभविष्यतां तदा यथायथं त्वमादेशौ प्रावर्तिष्येताम् , एवं समासेच्छयोच्चरितयुष्मदस्मच्छब्दौ द्वित्वसंख्याविशिष्टबोधकौ तदा युवावादेशौ बोध्यौ समस्तार्थगतसंख्या त्वमादेशस्थलयो द्वित्वादिका, युवावादेशस्थलयोश्चैकत्वादिका वा तदापि । परन्तु सु–जस्–ङे–ङस्सु परतः सदैव त्वमादेशौ पूर्वविप्रतिषेधेन, युवावादेशौ च परविप्रतिषेधेन, त्व–अह–यूय–वय–तुभ्य–मह्य–तव–ममादेशाः प्रबाध्य प्रवर्तन्ते । युष्मानस्मान्वातिक्रान्त इति विग्रहे तु युष्मदर्थगतबहुत्वसंख्यासत्त्वेन समस्तार्थगतैकत्वसंख्ययैकवचनाद्यानयनेऽपि त्व–म–युवावादेशाः न प्रवर्तेरन् , तत्र युष्मदस्मदर्थगतैकत्वद्वित्वसंख्ययोः क्रमशोऽभावादिति दिक् ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| द्वि० | अतियुष्माम् | अतियुष्माम् | अतियुष्मान् | कर्म |
| तृ० | अतियुष्मया | अतियुष्माभ्याम् | अतियुष्माभिः | करण |
| च० | अतितुभ्यम् | अतियुष्माभ्याम् | अतियुष्माभिः | सम्प्र० |
| पं० | अतियुष्मत् | अतियुष्माभ्याम् | अतियुष्मत् | अपा० |
| ष० | अतितव | अतियुष्मयोः | अतियुष्माकम् | सम्ब० |
| स० | अतियुष्मयि | अतियुष्मयोः | अतियुष्मासु | अधि० |
| | हे अतित्वम् | हे अतियुष्माम् | हे अतियूयम् | सम्बो० |

[२६२] माम्, अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ताः, वा इति विग्रहे निष्पन्नः अत्यस्मद्[1] शब्दः ( हमको अपनाने वाला—वाले )

| | | | | |
|---|---|---|---|---|
| प्र० | अत्यहम् | अतिमाम् | अतिवयम् | कर्ता |
| द्वि० | अतिमाम् | अतिमाम् | अतित्वान् | कर्म |
| तृ० | अतिमया | अतिमाभ्याम् | अतिमाभिः | करण |
| च० | अतितुभ्यम् | अतिमाभ्याम् | अतिमाभिः | सम्प्र० |
| पं० | अतिमत् | अतिमाभ्याम् | अतिमत् | अपा० |
| ष० | अतिमम | अतिमयोः | अतिमाकम् | सम्ब० |
| स० | अतिमयि | अतिमयोः | अतिमासु | अधि० |
| | हे अत्यहम् | हे अतिमाम् | हे अतिवयम् | सम्बो० |

[२६३] आवाम्, अतिक्रान्तः, अतिक्रान्तौ, 'अतिक्रान्ताः वा इति विग्रहे निष्पन्नः 'अत्यस्मद्' शब्दः (हम दोनों को अपनाने वाला—वाले)

| | | | | |
|---|---|---|---|---|
| प्र० | अत्यहम् | अत्यावाम् | अतिवयम् | कर्ता |
| द्वि० | अत्यावाम् | अत्यावाम् | अत्यावान् | कर्म |
| तृ० | अत्यावया | अत्यावाभ्याम् | अत्यावाभिः | करण |
| च० | अतिमह्यम् | अत्यावाभ्याम् | अत्यावभ्यम् | सम्प्र० |

(१) त्वामतिक्रान्त इत्यादिविग्रहनिष्पन्नाऽतियुष्मच्छब्दरीत्या व्याख्यानमूहनीयम् । (२) युवामतिक्रान्त इत्यादिस्थलीयव्याख्यावत् व्याख्येयम् ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| पं० | अत्यावत् | अत्यावाभ्याम् | अत्यावत् | अपा० |
| ष० | अतिमम | अत्यावयोः | अत्यावाकम् | सम्ब० |
| स० | अत्यावयि | अत्यावयोः | अत्यावासु | अधि० |
| | हे अत्यहम् | हे अत्यावाम् | हे अतिवयम् | सम्बो० |

[२६४] अस्मान्, अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ताः, वा इति विग्रहे निष्पन्नः 'अत्यस्मद्'[1] शब्दः (हम सबको अपनाने वाला-वाले)

| | | | | |
|---|---|---|---|---|
| प्र० | अतित्वम् | अत्यस्माम् | अतिवयम् | कर्त्ता |
| द्वि० | अत्यस्माम् | अत्यस्माम् | अत्यस्मान् | कर्म |
| तृ० | अत्यस्मया | अत्यस्माभ्याम् | अत्यस्माभिः | करण |
| च० | अतिमह्यम् | अत्यस्माभ्याम् | अत्यस्मभ्यम् | सम्प्र० |
| पं० | अत्यस्मत् | अत्यस्माभ्याम् | अत्यस्मत् | अपा० |
| ष० | अतिमम | अत्यस्मयोः | अत्यस्माकम् | सम्ब० |
| स० | अत्यस्मयि | अत्यस्मयोः | अत्यस्मासु | अधि० |
| | हे अतित्वम् | हे अत्यस्माम् | हे अतिवयम् | सम्बो० |

[ २६५ ] दकारान्त-पुंलिङ्गः 'सुपाद्' शब्दः (सुन्दर पैर वाला)

| | | | | |
|---|---|---|---|---|
| प्र० | सुपात्[2]-द् | सुपादौ | सुपादः | कर्त्ता |
| द्वि० | सुपादम् | सुपादौ | सुपदः[3] | कर्म |
| तृ० | सुपदा | सुपाद्भ्याम् | सुपाद्भिः | करण |
| च० | सुपदे | सुपाद्भ्याम् | सुपाद्भ्यः | सम्प्र० |
| पं० | सुपदः | सुपाद्भ्याम् | सुपाद्भ्यः | अपा० |
| ष० | सुपदः | सुपदोः | सुपदाम् | सम्ब० |
| स० | सुपदि | सुपदोः | सुपात्सु | अधि० |
| | हे सुपात्-द् | हे सुपादौ | हे सुपादः | सम्बो० |

(१) युष्मानतिक्रान्त इत्यादि विग्रहस्थलीयव्याख्यानरीत्या बोध्यम्। (२) सु=शोभनौ पादौ यस्येति बहुव्रीहिः 'संख्यासुपूर्वस्ये'ति पादस्यान्तलोपः। (३) 'पादः पत्'।

[२६६] थान्त-पुंल्लिङ्गः 'अग्निमथ्' शब्दः (अग्निको मथन करने वाला)

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | अग्निमत्[1]-द्[2] | अग्निमथौ | अग्निमथः | कर्त्ता |
| द्वि० | अग्निमथम् | अग्निमथौ | अग्निमथः | कर्म |
| तृ० | अग्निमथा | अग्निमद्भ्याम्[2] | अग्निमद्भिः | करण |
| च० | अग्निमथे | अग्निमद्भ्याम् | अग्निमद्भ्यः | सम्प्र० |
| पं० | अग्निमथः | अग्निमद्भ्याम् | अग्निमद्भ्यः | अपा० |
| ष० | अग्निमथः | अग्निमथोः | अग्निमथाम् | सम्ब० |
| स० | अग्निमथि | अग्निमथोः | अग्निमत्सु | अधि० |
| | हे अग्निमत्-द् | हे अग्निमथौ | हे अग्निमथः | सम्बो० |

[२६७] गतौ 'प्राञ्च्' शब्दश्चकारान्तः ( पूर्व )

| | | | | |
|---|---|---|---|---|
| प्र० | प्राङ्[3] | प्राञ्चौ[4] | प्राञ्चः | कर्त्ता |
| द्वि० | प्राञ्चम् | प्राञ्चौ | प्राचः[5] | कर्म |
| तृ० | प्राचा | प्राग्भ्याम्[6] | प्राग्भिः | करण |
| च० | प्राचे | प्राग्भ्याम् | प्राग्भ्यः | सम्प्र० |
| पं० | प्राचः | प्राग्भ्याम् | प्राग्भ्यः | अपा० |
| ष० | प्राचः | प्राचोः | प्राचाम् | सम्ब० |
| स० | प्राचि | प्राचोः | प्राक्षु | अधि० |
| | हे प्राङ् | हे प्राञ्चौ | हे प्राञ्चः | सम्बो० |

[२६८] गतौ 'प्रत्यञ्च्' शब्दश्चकारान्तः ( पश्चिम् )

---

(१) अग्निं मन्थतीति 'अग्निमत्' । मथ्नातेर्मन्थतेश्च क्विपि 'अनिदितामि'ति नलोपः । (२) 'स्वादिष्वि'ति पदत्वात् जश्त्वम् । (३) प्र-अञ्चतीत्यर्थे 'अञ्चुगति-पूजनयोः' इति गत्यर्थकात् अञ्च्धातोः 'ऋत्विगि'त्यादिसूत्रेण क्विन् तस्य सर्वापहारे 'अनिदितामि'ति नलोपे सवर्णदीर्घे नुमि संयोगान्तलोपे नस्य कुत्वेन ङकारः । (४) अनुस्वारपरसवर्णौ । (५) शसादावचि भत्वात् 'अचः' इत्यल्लोपे 'चौ' इति दीर्घः । (६) पदत्वात् 'चोः कुः' इति कुत्वे जश्त्वम्

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | प्रत्यङ्[1] | प्रत्यञ्चौ[2] | प्रत्यञ्चः | कर्त्ता |
| द्वि० | प्रत्यञ्चम् | प्रत्यञ्चौ | प्रतीचः[3] | कर्म |
| तृ० | प्रतीचा | प्रत्यग्भ्याम्[4] | प्रत्यग्भिः | करण |
| च० | प्रतीचे | प्रत्यग्भ्याम् | प्रत्यग्भ्यः | सम्प्र० |
| पं० | प्रतीचः | प्रत्यग्भ्याम् | प्रत्यग्भ्यः | अपा० |
| ष० | प्रतीचः | प्रतीचोः | प्रतीचाम् | सम्ब० |
| स० | प्रतीचि | प्रतीचोः | प्रत्यक्षु | अधि० |
| | हे प्रत्यङ् | हे प्रत्यञ्चौ | हे प्रत्यञ्चः | सम्बो० |

[ २६९ ] चकारान्त—पुंलिङ्गः गतौ—'अमुमुयञ्चु' शब्दः

( यह प्राप्त करने वाला )

| | | | | |
|---|---|---|---|---|
| प्र० | अमुमुयङ्[5] | अमुमुयञ्चौ | अमुमुयञ्चः | कर्त्ता |
| द्वि० | अमुमुयञ्चम् | अमुमुयञ्चौ | अमुमुईचः[6] | कर्म |

(१) प्रतिपूर्वकात् गत्यर्थकाऽञ्च्धातोः क्विनि 'अनिदितामि'ति नलोपे यणि प्रत्यच् शब्दात् सुबुत्पत्तिः । ततः नुमि सुलोपे संयोगान्तलोपे च 'क्विन्प्रत्ययस्ये'ति कुत्वम् । (२) अनुस्वार परसवर्णौ । (३) अत्रायं विशेषः—प्रति अच् इति स्थिते अन्तरङ्गोऽपि यण् इह न प्रवर्तते, 'अचः' इति लोपेन यण् निमित्तस्याऽकारस्य विनाशोन्मुखत्वेन 'अकृतव्यूहे'ति परिभाषानिषेधात् । ततश्च नलोपे शसि 'प्रति अच् अस्' इति दशायां 'अचः' इत्यल्लोपे 'चौ' इति दीर्घः । (४) पदत्वात् 'चोः कुः' इति कुत्वम् । (५) अमुमञ्चतीति विग्रहे क्विनि उपपदसमासे अदस् अञ्च्' इति स्थिते परत्वात् 'अनिदितामि'ति नलोपे 'अदस् अच्' इति स्थिते 'विष्वग्देवयोश्चे'ति (अत्र सूत्रे अप्रत्यय इति—अविद्यमानः प्रत्ययोऽप्रत्ययः क्विन्क्विबादिरिति यावत् ) अदसः टेः 'अद्रि' आदेशे यणि नुमि सुलोपे संयोगान्तलोपे नकारस्य कुत्वेन ङकारे च 'अदद्र्यङ्' इति स्थिते । 'अदसोऽसेरि'ति (अत्र सूत्रे अदसः, असेः, दात्, उ, दः, मः इति छेदः) प्रथमदकारस्य मत्वे तदुत्तरस्याकारस्य उत्वम्, एवं द्वितीयदकारस्यापि मत्वे तदुत्तरस्य रेफस्य च मत्वम् । (६) अन्तरङ्गोऽपि यण् 'अचइतिलोपविषये न प्रवर्तते इति प्रागुक्तं न विस्मर्तव्यम् ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| तृ० | अमुमुईचा | अमुमुयग्भ्याम् | अमुमुयग्भिः | करण |
| च० | अमुमुईचे | अमुमुयग्भ्याम् | अमुमुयग्भ्यः | सम्प्र० |
| पं० | अमुमुईचः | अमुमुयग्भ्याम् | अमुमुयग्भ्यः | अपा० |
| ष० | अमुमुईचः | अमुमुईचोः | अमुमुईचाम् | सम्ब० |
| स० | अमुमुईचि | अमुमुईचोः | अमुमुयक्षु | अधि० |
| | हे अमुमुयङ् | हे अमुमुयञ्चौ | हे अमुमुयञ्चः | सम्बो० |

[ २७० ] चकारान्त–पुंल्लिङ्गः गतौ 'अदमुयञ्च्' शब्दः ।

| | | | | |
|---|---|---|---|---|
| प्र० | अदमुयङ्[२] | अदमुयञ्चौ | अदमुयञ्चः | कर्त्ता |
| द्वि० | अदमुयञ्चम् | अदमुयञ्चौ | अदमुईचः | कर्म० |
| तृ० | अदमुईचा | अदमुयग्भ्याम् | अदमुयग्भिः | करण |
| च० | अदमुईचे | अदमुयग्भ्याम् | अदमुयग्भ्यः | सम्प्र० |
| पं० | अदमुईचः | अदमुयग्भ्याम् | अदमुयग्भ्यः | अपा० |

(१) अमुमु+इ+अच् भ्याम्' इति स्थिते इकारे परे उकारस्य यण तु न मुत्वस्याऽसिद्धात्वात् ।

(२) अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ।

इति वार्तिककृदुक्तिः । अयम्भावः–अदसष्टेरद्रेर्विधौ सति अदद्र्यच् इत्यत्र प्रथम–द्वितीययोर्दकारयोः पृथक् मत्वं, तदुत्तरयोः अवर्ण–रेफयोः उत्वञ्च युगपदेव लत्ववत् ='चलीक्लृप्यते' इत्यत्र चरीकृप्यते इति स्थिते रेफ रिकारयोः यथा कृपो रो लः' इति लत्वं तद्वत्, केचिदिच्छन्ति । ( तन्मते अमुमुयङ्' इति प्रागुक्तम् ) केचित् 'अन्त्यबाधे'ति परिभाषया अन्त्यसदेशस्यैव मुत्वमिच्छन्ति ( तन्मते अयम 'अदमुयङ्' इति ) एके=आचार्याः, अद्रयादेशे सति प्रथमद्वितीययोश्च मुत्वं नैव इच्छन्ति, हि=यतः ( सूत्रे ) असेरिति दृश्यते, एतन्मते 'असेरि'ति नायं तत्पुरुषः किन्तु असः सेर्यस्य स–असिः, तस्य असेरिति, सकारस्यानिकाऽकारवतः इत्यर्थः । एवञ्च अदस्शब्दस्य त्यदाद्यत्वे कृते एव सकारस्यानिकाऽकारवत्वमिति अद्र्यादेशे न मुत्वमिति भावः, एतन्मते 'अदद्र्यङ्' इति रूपमग्रे वक्ष्यामः ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| ष० | अदमुईचः | अदमुईचोः | अदमुईचाम् | सम्ब० |
| स० | अदमुईचि | अदमुईचोः | अदमुयक्षु | अधि० |
| | हे अदमुयङ् | हे अदमुयञ्चौ | हे अदमुयञ्चः | सम्बो० |

[२७१] चकारान्त—पुंल्लिङ्गः गतौ—'अदद्र्यञ्च्' शब्दः ।

| | | | | |
|---|---|---|---|---|
| प्र० | अदद्र्यङ् | अदद्र्यञ्चौ | अदद्र्यञ्चः | कर्ता |
| द्वि० | अदद्र्यञ्चम् | अदद्र्यञ्चौ | अदद्रीचः | कर्म |
| तृ० | अदद्रीचा | अदद्र्यग्भ्याम् | अदद्र्यग्भिः | करण |
| च० | अदद्रीचे | अदद्र्यग्भ्याम् | अदद्र्यग्भ्यः | सम्प्र० |
| पं० | अदद्रीचः | अदद्र्यग्भ्याम् | अदद्र्यग्भ्यः | अपा० |
| ष० | अदद्रीचः | अदद्रीचोः | अदद्रीचाम् | सम्ब० |
| स० | अदद्रीचि | अदद्रीचोः | अदद्र्यक्षु | अधि० |
| | हे अदद्र्यङ् | हे अदद्र्यञ्चौ | हे अदद्र्यञ्चः | सम्बो० |

[२७२] चकारान्त—पुंल्लिङ्गः गतौ—'उदञ्च्' शब्दः (उत्तर)

| | | | | |
|---|---|---|---|---|
| प्र० | उदङ्[1] | उदञ्चौ | उदञ्चः | कर्ता |
| द्वि० | उदञ्चम् | उदञ्चौ | उदीचः[2] | कर्म |
| तृ० | उदीचा | उदग्भ्याम् | उदग्भिः | करण |
| च० | उदीचे | उदग्भ्याम् | उदग्भ्यः | सम्प्र० |
| पं० | उदीचः | उदग्भ्याम् | उदग्भ्यः | अपा० |
| ष० | उदीचः | उदीचोः | उदीचाम् | सम्ब० |
| स० | उदीचि | उदीचोः | उदक्षु | अधि० |
| | हे उदङः | हे उदञ्चौ | हे उदञ्चः | सम्बो० |

(२७३) चकारान्त-पुंल्लिङ्गः गतौ-'सम्यञ्च्' शब्दः (ठीक चलने वाला)

| | | | | |
|---|---|---|---|---|
| प्र० | सम्यङ्[3] | सम्यञ्चौ | सम्यञ्चः | कर्ता |

(१) उत् अञ्चतीति विग्रहः । क्विन्नादिकार्यं 'प्राञ्च्' शब्दवत्, अत्र दीर्घाभावः इति विशेषः । (२) शसादावचि भत्वात् 'अचः' इत्यल्लोपे प्राप्ते 'उद ईत्' इति ईत्वम् । (३) सम्यक् अञ्चतीति विग्रहे क्विन्नाद्यु रं 'समः समि' इति सम्यादेशे 'प्रत्यञ्च्' शब्दवदन्यत् कार्यं ज्ञेयम् ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| | सम्यञ्चम् | सम्यञ्चौ | समीचः | कर्म |
| | समीचा | सम्यग्भ्याम् | सम्यग्भिः | करण |
| | समीचे | सम्यग्भ्याम् | सम्यग्भ्यः | सम्प्र |
| | समीचः | सम्यग्भ्याम् | सम्यग्भ्यः | अपा० |
| | समीचः | समीचोः | समीचाम् | सम्ब० |
| | समीचि | समीचोः | सम्यक्षु | अधि० |
| | हे सम्यङ् | हे सम्यञ्चौ | हे सम्यञ्चः | सम्बो० |

[ २७४ ] चकारान्त-पुंल्लिङ्गः गतौ-'सध्र्यञ्च्' शब्दः ( साथी )

| | | | | |
|---|---|---|---|---|
| प्र० | सध्र्यङ्[1] | सध्र्यञ्चौ | सध्र्यञ्चः | कर्त्ता |
| द्वि० | सध्र्यञ्चम् | सध्र्यञ्चौ | सध्रीचः | कर्म |
| तृ० | सध्रीचा | सध्र्यग्भ्याम् | सध्र्यग्भिः | करण |
| च० | सध्रीचे | सध्र्यग्भ्याम् | सध्र्यग्यः | सम्प्र० |
| पं० | सध्रीचः | सध्र्यग्भ्याम् | सध्र्यग्भ्यः | अपा० |
| ष० | सध्रीचः | सध्रीचोः | सध्रीचाम् | सम्ब० |
| स० | सध्रीचि | सध्रीचोः | सध्र्यक्षु | अधि० |
| | हे सध्र्यङ् | हे सध्र्यञ्चौ | हे सध्र्यञ्चः | सम्बो० |

[ २७५ ] चकारान्त-पुंल्लिङ्गः गतौ 'तिर्यञ्च्' शब्दः

( टेढ़ा-मेढ़ा चलने वाला—पशु--पक्षी )

| | | | | |
|---|---|---|---|---|
| प्र० | तिर्यङ्[2] | तिर्यञ्चौ | तिर्यञ्चः | कर्त्ता |
| द्वि० | तिर्यञ्चम् | तिर्यञ्चौ | तिरश्चः[3] | कर्म |

(१) सह अञ्चति=गच्छति, इति विग्रहे क्विन्नाद्युत्तरं 'सहस्य सध्रिः' इति
सध्र्यादेशे यणि अत्राऽपि 'प्रत्यञ्च्' शब्दवत् कार्यं बोध्यम्। (२) तिरः=कु-
टिलम्, अञ्चति=गच्छति, इति विग्रहे पूर्ववत् क्विन्नादेशोत्तरं 'तिरसस्तिर्यलोपे'
[ अत्र सूत्रे 'अलोपे' इत्यत्र बहुव्रीहिः-नविद्यते ( 'अचः' इति ) लोपो यस्य स
'अलोपः' तस्मिन् अलोपे इति ] इति तिरसः तिर्याऽऽदेशे यणि कुत्वादिकं पूर्ववत्
(३) शसादवचि 'अचः' इति लोपसत्त्वेन तिर्याभावे श्चुत्वम्।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| तृ० | तिरश्चा | तिर्यग्भ्याम् | तिर्यग्भिः | करण |
| च० | तिरश्चे | तिर्यग्भ्याम् | तिर्यग्भ्यः | सम्प्र० |
| पं० | तिरश्चः | तिर्यग्भ्याम् | तिर्यग्भ्यः | अपा० |
| ष० | तिरश्चः | तिरश्चोः | तिरश्चाम् | सम्ब० |
| स० | तिरश्चि | तिरश्चोः | तिर्यक्षु | अधि० |
| | हे तिर्यङ् | हे तिर्यञ्चौ | हे तिर्यञ्चः | सम्बो० |

[ २७६ ] चकारान्त-पुंल्लिङ्गः पूजायां 'प्राञ्च्' शब्दः ( पूज्य )

| | | | | |
|---|---|---|---|---|
| प्र० | प्राङ्[1] | प्राञ्चौ | प्राञ्चः | कर्त्ता |
| द्वि० | प्राञ्चम् | प्राञ्चौ | प्राञ्चः[2] | कर्म |
| तृ० | प्राञ्चा | प्राङ्भ्याम् | प्राङ्भिः | करण |
| च० | प्राञ्चे | प्राङ्भ्याम् | प्राङ्भ्यः | सम्प्र० |
| पं० | प्राञ्चः | प्राङ्भ्याम् | प्राङ्भ्यः | अपा० |
| ष० | प्राञ्चः | प्राञ्चोः | प्राञ्चाम् | सम्ब० |
| स० | प्राञ्चि | प्राञ्चोः | प्राङ्खसु[3] / प्राङ्क्षु / प्राङ्षु | अधि० |
| | हे प्राङ् | हे प्राञ्चौ | हे प्राञ्चः | सम्बो० |

एवं पूजार्थे-प्रत्यञ्च्, उदञ्च्' सम्यञ्च्, सध्र्यञ्च्, तिर्यञ्च्, अमुमुयञ्च्, अदमुयञ्च् अदद्र्यञ्च् शब्दानामपि बोध्यम् ।

---

(१) 'अञ्चु गतिपूजनयोः' तत्र पूजार्थे 'अनिदितामि'ति नलोपे प्राप्ते 'नाञ्चेः पूजायामि'ति निषिध्यते । यत्तु नलोपे निषेधेऽपि नुमा नकारद्वयश्रवणं दुर्वारमिति तन्न, 'उगिदचामि'ति सूत्रे नलोपिनोऽञ्चतेरेव ग्रहणात् । (२) शसादावचि 'अचः' इत्यल्लोपो न भवति, तत्र सूत्रेऽपि लुप्तनकारस्याञ्चतेरेव ग्रहणात् । (३) प्राङ् सु इति स्थिते 'ङ्णोः कुक्टुक् शरि' इति कुकि 'चयोः द्वितीयाः' इति खकारे च कवर्गात् परत्वेन षत्वम् ।

[ २७७ ] चकारान्त-पुंल्लिङ्गः 'क्रौञ्च्' शब्दः ( क्रौंच पक्षी )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | कुङ्[1] | क्रुञ्चौ | क्रुञ्चः | कर्त्ता |
| द्वि० | क्रुञ्चम् | क्रुञ्चौ | क्रुञ्चः | कर्म |
| तृ० | क्रुञ्चा | क्रुङ्भ्याम् | क्रुङ्भिः | करण |
| च० | क्रुञ्चे | क्रुङ्भ्याम् | क्रुङ्भ्यः | सम्प्र० |
| पं० | क्रुञ्चः | क्रुङ्भ्याम् | क्रुङ्भ्यः | अपा० |
| ष० | क्रुञ्चः | क्रुञ्चोः | क्रुञ्चाम् | सम्ब० |
| स० | क्रुञ्चि | क्रुञ्चोः | क्रुङ्क्ष्षु / क्रुङ्क्षु-क्रुङ्षु | अधि० |
| | हे क्रुङ् | हे क्रुञ्चौ | हे क्रुञ्चः | सम्बो० |

[२७८] चकारान्त-पुंल्लिङ्गः 'पयोमुच्' शब्दः ( मेघ )

| | | | | |
|---|---|---|---|---|
| प्र० | पयोमुक्-ग्[2] | पयोमुचौ | पयोमुचः | कर्ता |
| द्वि० | पयोमुचम् | पयोमुचौ | पयोमुचः | कर्म |
| तृ० | पयोमुचा | पयोमुग्भ्याम् | पयोमुग्भिः | करण |
| च० | पयोमुचे | पयोमुग्भ्याम् | पयोमुग्भ्यः | सम्प्र० |
| पं० | पयोमुचः | पयोमुग्भ्याम् | पयोमुग्भ्यः | अपा० |

(१) 'क्रुञ्च कौटिल्याल्पीभावयोः' अस्मात् निरुपपदात् 'ऋत्विगित्यादिना निपातनात् क्विनि नलोपाऽभावे च हल्ङ्यादिना सुलोपे संयोगान्तलोपे नकारस्य 'क्विन्प्रत्ययस्येति' कुत्वम् । वस्तुतस्तु 'नलोपाभावोऽपि निपात्यते' इति परमल-घोक्तं न विचारसहम्, 'परेश्च घाङ्कयोः' इति सूत्रस्थभाष्यविरोधात्, तत्र हि-'क्रुञ्चा' इत्यत्र 'चोः कुः' इति कुत्वमाशङ्क्य 'ऋत्विगित्यादिना 'क्रुञ्चे'ति निपा-तनात् कुत्वमेव समाहितम् । भवन्मते तु नकारस्यानुस्वारपरसवर्णाभ्यां ञकारो निर्देशः तर्हि तस्य कुत्वप्रसक्तिरेव नास्तीति तदसङ्गतिः स्यात्तस्मात् स्वाभाविक-नोपधस्यैव धातुपाठे निर्देशः इति दिक् ।' (२) पयः मुञ्चतीति पयोमुक् । 'मुच्लृ मोक्षणे' अस्मात् क्विप् । सुलोपे कुत्वे जश्त्वचर्त्वे ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| ष० | पयोमुचः | पयोमुचोः | पयोमुचाम् | सम्ब० |
| स० | पयोमुचि | पयोमुचोः | पयोमुक्षु | अधि० |
| | हे पयोमुक्-ग् | हे पयोमुचौ | हे पयोमुचः | सम्बो० |

[२७९] चकारान्त-पुंल्लिङ्गः 'सुवृश्च्' शब्दः ( अच्छा करने वाला )

| | | | | |
|---|---|---|---|---|
| प्र० | सुवृट्-ड्[1] | सुवृश्चौ | सुवृश्चः | कर्ता |
| द्वि० | सुवृश्चम् | सुवृश्चौ | सुवृश्चः | कर्म |
| तृ० | सुवृश्चा | सुवृड्भ्याम् | सुवृड्भिः | करण |
| च० | सुवृश्चे | सुवृड्भ्याम् | सुवृड्भ्यः | सम्प्र० |
| पं० | सुवृश्चः | सुवृड्भ्याम् | सुवृड्भ्यः | अपा० |
| ष० | सुवृश्चः | सुवृश्चोः | सुवृश्चाम् | सम्ब० |
| स० | सुवृश्चि | सुवृश्चोः | सुवृट्त्सु[2] / सुवृट्सु | अधि० |
| | हे सुवृट्-ड् | हे सुवृश्चौ | हे सुवृश्चः | सम्बो० |

[ २८० ] तकारान्त—पुंल्लिङ्गो 'महत्' शब्दः ( बड़ा, श्रेष्ठ )

| | | | | |
|---|---|---|---|---|
| प्र० | महान्[3] | महान्तौ | महान्तः | कर्ता |

(१) सुष्ठु वृश्चतीति 'सुवृट्' सुपूर्वात् 'ओ व्रश्चू छेदने' इति धातोः क्विपि 'ग्रहिज्ये'ति सम्प्रसारणे 'सुवृश्च्' शब्दः। ततः सुलोपे 'व्रश्चे'ति षत्वे 'स्कोरि' सलोपे जश्त्वचर्त्वे। नच 'स्कोरि'ति सूत्रे दन्त्यसकारस्यैव निर्देशेन कथमत्र शलोपः इति चेत्सत्यम्, धातुपाठे व्रस्चू इति सस्य श्चुत्वे कृते 'व्रश्च' इति निर्देशः, तस्य श्चुत्वस्यासिद्धत्वात् 'स्कोरि'ति सलोपस्य सुतरां प्रवृत्तेः। (२) चर्त्वस्याऽसिद्धत्वात् पूर्वं 'ङः सी'ति वा धुट्, ततश्चर्त्वम्। (३) मह्यते=पूज्यते इति 'महान्' कर्तरि कृत्' इति कर्त्रर्थं बाधित्वा 'वर्तमाने पृषन्महदि'त्युणादिसूत्रेण महेः कर्मणि अतिप्रत्ययः 'शतृवद्भावश्च निपात्यते। ( शतृवद्भावेन 'सुटि' उगित्वात् नुम् भवतीति बोध्यम् ) ततश्च महत् शब्दात् सौ 'उगिदचा'मिति मि 'सान्तमहतः' इति सर्वनामस्थाने परे दीर्घे सति सुलोपे संयोगान्तलोपः।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| ० | महान्तम् | महान्तौ | महतः | कर्म |
| ० | महता | महद्भ्याम्[1] | महद्भिः | करण |
| ० | महते | महद्भ्याम् | महद्भ्यः | सम्प्र० |
| ० | महतः | महद्भ्याम् | महद्भ्यः | अपा० |
| ० | महतः | महतोः | महताम् | सम्ब० |
| स० | महति | महतोः | महत्सु | अधि० |
| | हे महन्[2] | हे महान्तौ | हे महान्तः | सम्बो० |

[ २८१ ] तकारान्त–पुंल्लिङ्गो 'धीमत्' शब्दः ( बुद्धिमान् )

| | | | | |
|---|---|---|---|---|
| प्र० | धीमान्[3] | धीमन्तौ[4] | धीमन्तः | कर्ता |
| द्वि० | धीमन्तम् | धीमन्तौ | धीमतः[5] | कर्म |
| तृ० | धीमता | धीमद्भ्याम् | धीमद्भिः | करण |
| च० | धीमते | धीमद्भ्याम् | धीमद्भ्यः | सम्प्र० |
| पं० | धीमतः | धीमद्भ्याम् | धीमद्भ्यः | अपा० |
| ष० | धीमतः | धीमतोः | धीमताम् | सम्ब० |
| स० | धीमति | धीमतोः | धीमत्सु | अधि० |
| | हे धीमन् | हे धीमन्तौ | हे धीमन्तः | सम्बो० |

[ २८२ ] तकारान्त–पुंल्लिङ्गो 'गोमत्' शब्दः

( गौको रखने वाला गोमान्, उसकी इच्छा करने वाला )

| | | | | |
|---|---|---|---|---|
| प्र० | गोमान्[6] | गोमन्तौ | गोमन्तः | कर्ता |

(१) असर्वनामस्थानत्वात् नुमूदीर्घयोरभावेन 'स्वादिष्विति पदत्वाजश्त्वम् ।
(२) असम्बुद्धावित्युक्तेर्नदीर्घः । (३) धीरस्यास्तीत्यर्थे 'तदस्यास्त्यस्मिन्निति
मतुप् इति मतुपि धीमच्छब्दात् सौ 'अत्वसन्तस्ये'ति दीर्घे नुमि नुलोपे
संयोगान्तलोपः । (४) अत्वन्तस्येति सूत्रे असम्बुद्धौ सौ परे इत्युक्तत्वात्
औजसादिषु न दीर्घः । (५) शसादौ महद्वत् कार्यं ज्ञेयम् । (६) गा वोऽ
स्यास्मिन् वा सन्तीति गोमान्, अस्त्यर्थे मतुप् । ततः गोमन्तमिच्छतीत्य

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| द्वि० | गोमन्तम् | गोमन्तौ | गोमतः | कर्म |
| तृ० | गोमता | गोमद्भ्याम् | गोमद्भिः | करण |
| च० | गोमते | गोमद्भ्याम् | गोमद्भ्यः | सम्प्र० |
| पं० | गोमतः | गोमद्भ्याम् | गोमद्भ्यः | अपा० |
| ष० | गोमतः | गोमतोः | गोमताम् | सम्ब० |
| स० | गोमति | गोमतोः | गोमत्सु | अधि० |
| | हे गोमन् | हे गोमन्तौ | हे गोमन्तः | सम्बो० |

| | | |
|---|---|---|
| [२८३] एवं श्रीमत् = श्रीमान् | श्रीमन्तौ | श्रीमन्तः |
| [२८४] बुद्धिमत् = बुद्धिमान् | बुद्धिमन्तौ | बुद्धिमन्तः । |
| [२८५] भगवत् = भगवान् | भगवन्तौ | भगवन्तः । |
| [२८६] यावत् = यावान् | यावन्तौ | यावन्तः । |
| [२८७] तावत् = तावान् | तावन्तौ | तावन्तः । |
| [२८८] एतावत् = एतावान् | एतावन्तौ | एतावन्तः । |
| [२८९] कियत् = कियान् | कियन्तौ | कियन्तः । |
| [२९०] इयत् = इयान् | इयन्तौ | इयन्तः । (इत्यादि) |

---

'सुप आत्मनः' इति क्यचि, क्यजन्तस्य 'सनाद्यन्ताः' इति धातुत्वात् कर्तरि क्विपि, 'यस्य हलः' 'अतो लोपः' इति यलोपाऽल्लोपयोर्गोमच्छब्दात् सुबुत्पत्तिः। गोमानिवाऽऽचरतीत्यर्थे तु 'सर्वः प्रातिपदिकेभ्यः' इति क्विपि, 'सनाद्यन्ताः' इति धातुत्वात् कर्तरि क्विपि सुबुत्पत्तिः। ततः 'अत्वसन्तस्ये'ति दीर्घे नुमि सुलोपः। नच 'उगिदचामि'ति सूत्रे अधातोरित्यस्य सत्त्वेन धातोर्नुमोऽप्राप्त्या क्यजन्तादिगोमच्छब्दस्य धातुत्वाभावान्नुम् न स्यादिति चेच्छृणु ? अञ्चतेरुगित्वादेव नुम् सिद्धेरज्ग्रहणसामर्थ्यात् 'धातोश्चेदुगित्कार्यं तर्हि अञ्चतेरेव' इति नियमात् अन्यधातोर्नुमोऽप्राप्त्या तद्व्यावृत्त्यर्थं कृतमधातुग्रहणं व्यर्थं सञ्ज्ञापयति-"अधातुभूतपूर्वस्यापि नुम्भवतीति" तेन प्रकृते गोमतः सम्प्रति धातुत्वाभावेऽपि भूतपूर्वधातुत्वमादाय नुम् सिद्धिरिति दिक्।

## [२९१] तान्त–पुंलिङ्गः सर्वनाम 'भवत्' शब्दः ( आप )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | भवान्[1] | भवन्तौ | भवन्तः | कर्ता |
| द्वि० | भवन्तम् | भवन्तौ | भवतः | कर्म |
| तृ० | भवता | भवद्भ्याम् | भवद्भिः | करण |
| च० | भवते | भवद्भ्याम् | भवद्भ्यः | सम्प्र० |
| पं० | भवतः | भवद्भ्याम् | भवद्भ्यः | अपा० |
| ष० | भवतः | भवतोः | भवताम् | सम्ब० |
| स० | भवति | भवतोः | भवत्सु | अधि० |

० ० ० ०

## [ २९२ ] शत्रन्तो 'भवत्' शब्दः ( होता हुआ )

| | | | | |
|---|---|---|---|---|
| प्र० | भवन्[2] | भवन्तौ | भवन्तः | कर्ता |
| द्वि० | भवन्तम् | भवन्तौ | भवतः | कर्म |

शेषं डवतुप्रत्ययान्तवत् ।

एवं कुर्वत्, ब्रुवत्, जानत्, करिष्यत्, गमिष्यत्,
इत्यादयोऽनभ्यस्तसंज्ञकाः ।

## [ २९३ ] शत्रन्तोऽभ्यस्तसंज्ञको 'ददत्' शब्दः ( देता हुआ )

| | | | | |
|---|---|---|---|---|
| प्र० | ददत्-द्[3] | ददतौ | ददतः | कर्ता |
| द्वि० | ददतम् | ददतौ | ददतः | कर्म |
| तृ० | ददता | ददद्भ्याम् | ददद्भिः | करण |
| च० | ददते | ददद्भ्याम् | ददद्भ्यः | सम्प्र० |
| पं० | ददतः | ददद्भ्याम् | ददद्भ्यः | अपा० |

(१) 'भातेर्डवतुः' इत्युणादिसूत्रेण भाधातोर्डवतुप्रत्यये डित्वाट्टिलोपे च 'भवत्' शब्दः । तस्मात् सौ 'अत्वसन्तस्ये'ति दीर्घे नुमि सुलोपे संयोगान्तलोपः । (२) भूधातोर्लटः शत्रादेशे शपि गुणावादेशयोः पररूपे 'भवत्' शब्दः । तस्माद सौ अत्वन्तत्वाभावेन दीर्घाऽभावात् नुमादिकार्यं पूर्ववत् । (३) ददातीति

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| ष० | ददतः | ददतोः | ददताम् | सम्ब० |
| स० | ददति | ददतोः | ददत्सु | अधि० |
| | हे ददत्-द् | हे ददतौ | हे ददतः | सम्बो० |

[२९४] शत्रन्तोऽभ्यस्तसंज्ञको 'जक्षत्' शब्दः ( हंसता हुआ )

| | | | | |
|---|---|---|---|---|
| प्र० | जक्षत्-द् | जक्षतौ | जक्षतः | कर्ता |
| द्वि० | जक्षतम् | जक्षतौ | जक्षत | कर्म० |
| तृ० | जक्षता | जक्षद्भ्याम् | जक्षद्भिः | करण |
| च० | जक्षते | जक्षद्भ्याम् | जक्षद्भ्यः | सम्प्र० |
| पं० | जक्षतः | जक्षद्भ्याम् | जक्षद्भ्यः | अपा० |
| ष० | जक्षतः | जक्षतोः | जक्षताम् | सम्ब० |
| स० | जक्षति | जक्षतोः | जक्षत्सु | अधि० |
| | हे जक्षत्-द् | हे जक्षतौ | हे जक्षतः | सम्बो० |

[ २९५ ] शत्रन्तोऽभ्यस्तसंज्ञकः 'जाग्रत्' शब्दः ( जागता हुआ )

| | | | | |
|---|---|---|---|---|
| प्र० | जाग्रत्-द्[२] | जाग्रतौ | जाग्रतः | कर्ता |
| द्वि० | जाग्रतम् | जाग्रतौ | जाग्रतः | कर्म |
| तृ० | जाग्रता | जाग्रद्भ्याम् | जाग्रद्भिः | करण |
| च० | जाग्रते | जाग्रद्भ्याम् | जाग्रद्भ्यः | सम्प्र० |
| पं० | जाग्रतः | जाग्रद्भ्याम् | जाग्रद्भ्यः | अपा० |
| ष० | जाग्रतः | जाग्रतोः | जाग्रताम् | सम्ब० |
| स० | जाग्रति | जाग्रतोः | जाग्रत्सु | अधि० |

---

'ददत्' दाधोः लटः शत्रादेशे शपः श्लौ 'श्लौ' इति द्वित्वे अभ्यासस्य ह्रस्वे च 'श्नाभ्यस्तयो'रित्याल्लोपे 'ददत्' शब्दः। ततः सौ हल्ङ्यादिलोपः। नुम् तु न 'उभे अभ्यस्तम्' इत्यभ्यस्तसंज्ञायां 'नाभ्यस्ताच्छतुः' इति निषेधात्। (१-२) 'जक्ष हसने' 'जागृ निद्राक्षये' 'दरिद्रा दुर्गतौ, 'चकासृ दीप्तौ' 'शासु अनुशिष्टौ' 'दीधीङ् दीप्तिदेवनयोः' 'वेवीङ् वेतिना तुल्ये' इति सप्त लुक्विकरणाः

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| | हे जाग्रत्-द् | हे जाग्रतौ | हे जाग्रतः | सम्बो० |

[२९६] शत्रन्तोऽभ्यस्तसंज्ञको 'दरिद्रत्' शब्दः ( दरिद्र होता हुआ )

| | | | | |
|---|---|---|---|---|
| प्र० | दरिद्रत्-द् | दरिद्रतौ | दरिद्रतः | कर्त्ता |
| द्वि० | दरिद्रतम् | दरिद्रतौ | दरिद्रतः | कर्म |
| तृ० | दरिद्रता | दरिद्रद्भ्याम् | दरिद्रद्भिः | करण |
| च० | दरिद्रते | दरिद्रद्भ्याम् | दरिद्रद्भ्यः | सम्प्र० |
| पं० | दरिद्रतः | दरिद्रद्भ्याम् | दरिद्रद्भ्यः | अपा० |
| ष० | दरिद्रतः | दरिद्रतोः | दरिद्रताम् | सम्ब० |
| स० | दरिद्रति | दरिद्रतोः | दरिद्रत्सु | अधि० |
| | हे दरिद्रत्-द् | हे दरिद्रतौ | हे दरिद्रतः | सम्बो० |

[२९७] शत्रन्तोऽभ्यस्तसंज्ञकः 'शाशत्' शब्दः (शासन करता हुआ)

| | | | | |
|---|---|---|---|---|
| प्र० | शाशत् द् | शाशतौ | शाशतः | कर्त्ता |
| द्वि० | शाशतम् | शाशतौ | शाशतः | कर्म |

इत्यादि 'दरिद्रत्' वत् ।

[ २९८ ] शत्रन्तोऽभ्यस्तसंज्ञक; 'चकाशत्' शब्दः

( प्रकाशित होता हुआ )

| | | | | |
|---|---|---|---|---|
| प्र० | चकाशत्-द् | चकाशतौ | चकाशतः | कर्त्ता |
| द्वि० | चकाशतम् | चकाशतौ | चकाशतः | कर्म |

इत्यादि 'दरिद्रत्' शब्दवत् ।

[२९९] शत्रन्तोऽभ्यस्तसंज्ञकः 'दीध्यत्' शब्दः (शोकित होता हुआ)

| | | | | |
|---|---|---|---|---|
| प्र० | दीध्यत्-द्[1] | दीध्यतौ | दीध्यतः | कर्त्ता |

---

अदादौ पठिताः तेभ्यो लटः शत्रादेशे शब्लुकि सुबुत्पत्तौ हल्ङ्यादिलोपः । नुम् तु न, 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञायां 'नाभ्यस्ताच्छतुः' इति निषेधात् । अन्यत् कार्यं सुगमम् । (१) 'दीधीङ् दीप्ति देवनयोः [देवनं शोकः] 'वेवीङ् वेतिना तुल्ये पी गति' इत्यनेन तुल्येऽर्थे वर्तते इत्यर्थः, आभ्यां लटः शत्रादेशे कृते शब्लुकि यणादे-

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| द्वि० | दीध्यतम् | दीध्यतौ | दीध्यतः | कर्म |

इत्यादि 'दरिद्रत्' शब्दवत् ।

[२००] शत्रन्तोऽभ्यस्तसंज्ञकः 'वेव्यत्' शब्दः ( समान होता हुआ )

| | | | | |
|---|---|---|---|---|
| प्र० | वेव्यत्-द् | वेव्यतौ | वेव्यतः | कर्ता |
| द्वि० | वेव्यतम् | वेव्यतौ | वेव्यतः | कर्म |

इत्यादि 'दरिद्रत' वत् ( इति संक्षित्यादयः ) ।

[२०१] पकारान्त-पुंलिङ्गः 'गुप्' शब्दः ( रक्षा करने वाला )

| | | | | |
|---|---|---|---|---|
| प्र० | गुप्-ब्[2] | गुपौ | गुपः | कर्ता |
| द्वि० | गुपम् | गुपौ | गुपः | कर्म |
| तृ० | गुपा | गुब्भ्याम् | गुब्भिः | करण |
| च० | गुपे | गुब्भ्याम् | गुब्भ्यः | सम्प्र० |
| पं० | गुपः | गुब्भ्याम् | गुब्भ्यः | अपा० |
| ष० | गुपः | गुपोः | गुपाम् | सम्ब० |
| स० | गुपि | गुपोः | गुप्सु | अधि० |
| | हे गुप्-ब् | हे गुपौ | हे गुपः | सम्बो० |

[२०२] शान्तः पुंलिङ्गः 'तादृश्' शब्दः ( वैसा, उसके सदृश )

| | | | | |
|---|---|---|---|---|
| प्र० | तादृक्-ग्[3] | तादृशौ | तादृशः | कर्ता |

---

शः । अभ्यस्तत्वान्न नुमिति विशेषः । नच दीधीवेव्योर्ङित्वेन आत्मनेपदित्वात् शत्रादेशः कथमिति वाच्यम्, "दीधीङादिषस्पर्यन्ताः पञ्चधातवश्छान्दसाः" इति परममूले प्रतिपादितत्वेनोभयोश्छान्दोमात्रविषयत्वात् 'व्यत्ययो बहुलम्' इति परस्मैपदविधानेन सानजसम्भवात् । (१) एतद्भिन्नाः सर्वे शत्रन्ताः पुंसि नपुंसके च सर्वनामस्थाने परे नित्यं नकारं लभन्ते इति ज्ञेयम् । (२) गोपायतीति गुप् । क्विपि विवक्षिते 'आयादयः' इत्यायप्रत्ययस्तु न तस्य वैकल्पिकत्वात् 'आयप्रत्ययपक्षे तु अतो लोपे यलोपे च 'गोपा' इति रूपं बोध्यम् । (३) स इवायं पश्यतीति विग्रहे 'त्यदादिष्वि'ति क्विनि सर्वापहारे उपपदसमासे 'आ सर्व·

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| द्वि० | तादृशम् | तादृशौ | तादृशः | कर्म |
| तृ० | तादृशा | तादृग्भ्याम् | तादृग्भिः | करण |
| च० | तादृशे | तादृग्भ्याम् | तादृग्भ्यः | सम्प्र० |
| पं० | तादृशः | तादृग्भ्याम् | तादृग्भ्यः | अपा० |
| ष० | तादृशः | तादृशोः | तादृशाम् | सम्ब० |
| स० | तादृशि | तादृशोः | तादृक्षु | अधि० |
| | हे तादृक्-ग् | हे तादृशौ | हे तादृशः | सम्बो० |

एवं यादृश् ( जैसा ), कीदृश् ( कैसा ), ईदृश्-एतादृश् (ऐसा), त्वादृश् ( तेरे ऐसा ), भवादृश् (आपके सदृश), युष्मादृश् (तुम्हारे सदृश), मादृश् ( मेरे सदृश् ), मर्मस्पृश् ( हृदयस्पर्शी ) इत्यादयः ।

[ २०२ ] शकारान्त-पुंल्लिङ्गो 'विश्' शब्दः ( वैश्य )

| | | | | |
|---|---|---|---|---|
| प्र० | विट्-ड् | विशौ | विशः | कर्ता |
| द्वि० | विशम् | विशौ | विशः | कर्म |
| तृ० | विशा | विड्भ्याम् | विड्भिः | करण |
| च० | विशे | विड्भ्याम् | विड्भ्यः | सम्प्र० |
| पं० | विशः | विड्भ्याम् | विड्भ्यः | अपा० |
| ष० | विशः | विशोः | विशाम् | सम्ब० |

---

नाम्नः'इत्यात्वे 'त + आ + दृश्' इति स्थिते सवर्णदीर्घे 'तादृश्' शब्दः । ततः सौ हल्ङ्यादिलोपे कुत्वस्याऽसिद्धत्वात् 'व्रश्चे'ति षत्वे तस्य जश्त्वे 'क्विन्प्रत्ययस्ये'ति कुत्वेन गकारे चर्त्वविकल्पः । अत्र कैयटादयः—'ता + दृश्' इति दशायां षत्वापवादात् कुत्वेन खकारे तस्य चर्त्वेन कः 'तादृक्' इति । नन्वेवं चर्त्वाऽभावपक्षे जश्त्वं प्रति कुत्वस्याऽसिद्धत्वात् 'तादृग्' इति द्वितीयं रूपं न स्यादिति चेन्न, 'दिगादिभ्यः' इति निर्देशात् असिद्धत्वाऽभावकल्पनेनाऽदोषात् । नच दधृग्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चुषु षत्वाप्राप्त्या तत्र कुत्वस्य सावकाशत्वेन कथमपवादः [ निरवकाशो विधिरपवादः ] इति वाच्यम् तत्रापि क्विन्विधानेनैव सिद्धेरिति दिक् । (१) 'विश प्रवेशने' अस्मात् क्विपि 'व्रश्चे'ति षत्वे जश्त्वचर्त्वे ।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| स० | विशि | विशोः | विट्त्सु-विट्सु[1] | अधि० |
| | हे विट्-ड् | हे विशौ | हे विशः | सम्बो० |

[ ३०४ ] शकारान्त-पुंल्लिङ्गो 'नश्'[2] शब्दः ( नष्ट होने वाला )

| | | | | |
|---|---|---|---|---|
| प्र० | नक्-ग् नट्-ड् | नशौ | नशः | कर्त्ता |
| द्वि० | नशम् | नशौ | नशः | कर्म |
| तृ० | नशा | नग्भ्याम् / नड्भ्याम् | नग्भिः / नड्भिः | करण |
| च० | नशे | नग्भ्याम् / नड्भ्याम् | नग्भ्यः / नड्भ्यः | सम्प्र० |
| पं० | नशः | नग्भ्याम् / नड्भ्याम् | नग्भ्यः / नड्भ्यः | अपा० |
| ष० | नशः | नशोः | नशाम् | सम्ब० |
| स० | नशि | नशोः | नक्षु[3]-नट्त्सु / नट्सु | अधि० |
| | हे नक्-ग् / हे नट्-ड् | हे नशौ | हे नशः | सम्बो० |

[३०५] शान्त-पुंल्लिङ्गो 'घृतस्पृश्' शब्दः (घृत को स्पर्श करने वाला)

| | | | | |
|---|---|---|---|---|
| प्र० | घृतस्पृक्[4]-ग् | घृतस्पृशौ | घृतस्पृशः | कर्त्ता |
| द्वि० | घृतस्पृशम् | घृतस्पृशौ | घृतस्पृशः | कर्म |
| तृ० | घृतस्पृशा | घृतस्पृग्भ्याम् | घृतस्पृग्भिः | करण |
| च० | घृतस्पृशे | घृतस्पृग्भ्याम् | घृतस्पृग्भ्यः | सम्प्र० |
| पं० | घृतस्पृशः | घृतस्पृग्भ्याम् | घृतस्पृग्भ्यः | अपा० |

(१) 'डः सि धुट्' इति विशेषः। (२) 'णश अदर्शने' अस्मात् क्विपि षत्वे प्राप्ते तं प्रबाध्य 'नशेर्वा' इति वा कुत्वम्। कुत्वाभावे षत्वे जश्त्वचर्त्वे रूपम्। (३) कुत्वपक्षे रूपम्, कुत्वाभावे 'डः सि धुट्' इति विशेषः। (४) घृतं घृतेन वास्पृशतीति विग्रहे "स्पृशोऽनुदके क्विन्' इति क्विनि उपपदसमासे षत्वादिकं पूर्ववत्।

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| ष० | घृतस्पृशः | घृतस्पृशोः | घृतस्पृशाम् | सम्ब० |
| स० | घृतस्पृशि | घृतस्पृशोः | घृतस्पृक्षु | अधि० |
| | हे घृतस्पृक्-ग् | हे घृतस्पृशौ | हे घृतस्पृशः | सम्बो० |

एवं स्पृक्[1], स्पृग्, स्पृशौ, स्पृशः इत्यादि।

[ २०६ ] षान्त-पुंल्लिङ्गो 'दधृष्' शब्दः ( धृष्ट )

| | | | | |
|---|---|---|---|---|
| प्र० | दधृक्-ग् | दधृषौ | दधृषः | कर्त्ता |
| द्वि० | दधृषम् | दधृषौ | दधृषः | कर्म |
| तृ० | दधृषा | दधृग्भ्याम् | दधृग्भिः | करण |
| च० | दधृषे | दधृग्भ्याम् | दधृग्भ्यः | सम्प्र० |
| पं० | दधृषः | दधृग्भ्याम् | दधृग्भ्यः | अपा० |
| ष० | दधृषः | दधृषोः | दधृषाम् | सम्ब० |
| स० | दधृषि | दधृषोः | दधृक्षु | अधि० |
| | हे दधृक्-ग् | हे दधृषौ | हे दधृषः | सम्बो० |

[ २०७ ] षान्त-पुंल्लिङ्गो 'रत्नमुष्' शब्दः ( रत्न को चुरानेवाला )

| | | | | |
|---|---|---|---|---|
| प्र० | रत्नमुट्-ड्[2] | रत्नमुषौ | रत्नमुषः | कर्ता |
| द्वि० | रत्नमुषम् | रत्नमुषौ | रत्नमुषः | कर्म |
| तृ० | रत्नमुषा | रत्नमुड्भ्याम् | रत्नमुड्भिः | करण |
| च० | रत्नमुषे | रत्नमुड्भ्याम् | रत्नमुड्भ्यः | सम्प्र० |
| पं० | रत्नमुषः | रत्नमुड्भ्याम् | रत्नमुड्भ्यः | अपा० |
| ष० | रत्नमुषः | रत्नमुषोः | रत्नमुषाम् | सम्ब० |

---

(१) स्पृशतीति स्पृक्। निरुपसर्गात् स्पृशेः क्विप्। षत्वकुत्वादिकन्तु 'घृतस्पृश्' शब्दवत्। नचात्र क्विन्नन्तत्वाभावात् कुत्वं कथमिति वाच्यम्, 'क्विनः कुः' इति वक्तव्ये 'क्विन् प्रत्ययस्य कुः' इत्यत्र प्रत्ययग्रहणसामर्थ्यात् क्विन्प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणेन क्विप्यपि कुत्वं स्यादिति। (२) रत्नानि मुष्णातीति रत्नमुट्। 'मुषस्तेये' अस्मात् क्विपि उपपदसमासे जश्त्वचर्त्वे।

[ २११ ] षान्त-पुँल्लिङ्गो 'विविक्ष्' शब्दः ( प्रवेश करनेवाला )

| | एकवचन | द्विवचन | बहुवचन | |
|---|---|---|---|---|
| प्र० | विविट्-ड् | विविक्षौ | विविक्षः | कर्ता |
| द्वि० | विविक्षम् | विविक्षौ | विविक्षः | कर्म |
| तृ० | विविक्षा | विविड्भ्याम् | विविड्भिः | करण |
| च० | विविक्षे | विविड्भ्याम् | विविड्भ्यः | सम्प्र० |
| पं० | विविक्षः | विविड्भ्याम् | विविड्भ्यः | अपा० |
| ष० | विविक्षः | विविक्षोः | विविक्षाम् | सम्ब० |
| स० | विविक्षि | विविक्षोः | विविट्त्सु<br>विविट्सु | अधि० |
| | हे विविट्-ड् | हे विविक्षौ | हे विविक्षः | सम्बो० |

[ २१२ ] सान्तः पुँल्लिङ्गो 'विद्वस्' शब्दः ( ज्ञानवान् पंडित )

| | | | | |
|---|---|---|---|---|
| प्र० | विद्वान् | विद्वांसौ | विद्वांसः | कर्ता |
| द्वि० | विद्वांसम् | विद्वांसौ | विदुषः | कर्म |
| तृ० | विदुषा | विद्वद्भ्याम् | विद्वद्भिः | करण |
| च० | विदुषे | विद्वद्भ्याम् | विद्वद्भ्यः | सम्प्र० |
| पं० | विदुषः | विद्वद्भ्याम् | विद्वद्भ्यः | अपा० |

---

(१) वेष्टुमिच्छतीति विग्रहे विशेः सनि द्वित्वादिकार्ये 'व्रश्चे'ति षत्वे 'षढोः कः सि' इति कत्वे प्रत्ययावयवत्वात् षत्वे 'सनाद्यन्ताः'इति धातुत्वात् क्विपि अतो लोपः' इत्यल्लोपे 'विविक्ष्' शब्दः। तस्मात् सौ हल्ङ्यादिलोपे संयोगान्तलोपे च 'निमित्तापाये नैमित्तिकस्याप्यपायः इति परिभाषया ककारस्यापि निवृत्तौ जश्त्व-चर्त्वे। संयोगादिलोपस्तु न कत्वस्याऽसिद्धत्वात्। एवंच षत्वस्याऽसिद्धत्वादिति मूलोक्तन्त्वयुक्तमेवेति ध्येयम्। (२) 'विविष्×सु' इति स्थिते सुपि परे 'षढोः कः सि' इति कत्वन्तु न जश्त्वेनाऽसिद्धत्वात्। (३) विद्धातोर्लेटि शत्रादेशे 'विदेः शतुर्वसुः'। अदादित्वात् शपो लुकि उगित्वान्नुमि 'सान्ते'ति दीर्घे सुलोपे 'विद्वान्' इति। (४) वसोः सम्प्रसारणम्'। (५) वसुस्त्रं स्वि'ति दत्वम्।

